# MudgalapurAna Khanda 4 Gajananacharitam

# मुद्गलपुराणं खण्डः ४ गजाननचरितम्

## Document Information

Text title : Mudgala Purana Khanda 4 Gajananacharitam

File name : mudgalapurANam4.itx

Category : purana, ganesha

Location : doc_purana

Proofread by : Yash Khasbage

Latest update : September 18-19, 2023 Ganeshachaturthi

Send corrections to : sanskrit at cheerful dot c om



Please note that proofreading is done using Devanagari version and other language/scripts are generated using **sanscript**.

September 18, 2023

*sanskritdocuments.org*

# मुद्गलपुराणं खण्डः ४ गजाननचरितम्

॥ मुद्गलपुराणं खण्डः ४॥

॥ अथ श्रीमुद्गलपुराणे चतुर्थः खण्डः प्रारभ्यते ॥

(Page खं. ४ अ. १ पान १)

## ४.१ चतुर्थीतपोवर्णनं नाम प्रथमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

शौनक उवाच ।
त्वया सूत महाप्राज्ञ महोदरचरित्रकम् ।
कथितं शान्तिदं मोहनाशकं संश्रुतं मया ॥ १॥

तथा तृप्तिं न याम्येव पायं पायं सुधामिव ।
नानेन सदृशं किञ्चिच्छान्तिदं विद्यते द्विज ॥ २॥

अतो गजाननस्यापि चरित्रं वद विस्तरात् ।
सर्वज्ञस्त्वं महाभाग मतोऽस्माभिर्न संशयः ॥ ३॥

मुद्गलस्य च दक्षस्य संवादं वद मानद ।
किं पृष्टं ब्रह्मपुत्रेण दक्षेणाग्रे सुबुद्धिना ॥ ४॥

सूत उवाच ।
शृणु भार्गव विप्रेन्द्र महाज्ञानकरं प्रभो ।
गजाननस्य माहात्म्यं कथयामि यथा श्रुतम् ॥ ५॥

श्रुत्वा महोदराख्यानं नानाख्यानसमन्वितम् ।
मोहनाशकरं दक्षो हर्षितो ह्यभवन् मुने ॥ ६॥

मुद्गलं पुनरप्याह योगीन्द्रं वेदपारगम् ।
विनयेन समायुक्तो गणेशज्ञानलालसः ॥ ७॥

दक्ष उवाच ।
महोदरस्य माहात्म्यं श्रुतं भक्तियुतेन भोः ।
तेनाऽऽनन्दसमायुक्तः कृतोऽहं योगिना त्वया ॥ ८॥

अधुना वद विप्रेश गजाननचरित्रकम् ।
कीदृशोऽवतरद्देवः कीदृशं ब्रह्म तत्र च ॥ ९॥

किमर्थं देहधारी स बभूव मुनिसत्तम ।
किं कर्मा किं गुणज्ञश्च वद सर्वं महामते ॥ १०॥

पूर्वपुण्यप्रभावेण सङ्गतिस्ते प्रजायते ।
धन्योऽहं सर्वभावेन शृणोमि च कथां शुभाम् ॥ ११॥

सूत उवाच ।
दक्षेणैवं महायोगी स पृष्टो बुद्धिशालिना ।
तं प्रत्युवाच भावज्ञो गाणपत्यपरायणः ॥ १२॥

मुद्गल उवाच ।
शृणु दक्ष महाभाग धन्योऽस्यत्र न संशयः ।
कथां वर्धयसि प्राज्ञ गाणेशीं योगदां पराम् ॥ १३॥

तव भावेन सन्तुष्टो वदामि सकलं प्रभो ।
गजाननस्य माहात्म्यं योगशान्तिपदप्रदम् ॥ १४॥

साङ्ख्यं ब्रह्म विदेहाख्यं कथितं योगिभिः परम् ।
तदेव गजवक्त्रं वै जानीहि त्वं प्रजापते ॥ १५॥

बिन्दुब्रह्मात्मको देहः सोऽहं वक्त्रं प्रकीर्तितम् ।
तयोरभेदको बोधो बभावेव स देहवान् ॥ १६॥

त्रिविधेषु स्थितो देवो तथापि तद्विवर्जितः ।
विदेहो गजवक्त्रश्च शोभत साङ्ख्यधारकः ॥ १७॥

बोधत्यागे महाभाग कः सङ्ख्यां कुरुते वद ।
ब्रह्मणां तेन साङ्ख्यं तद्ब्रह्म वेदे प्रकाशितम् ॥ १८॥

लोभासुरविनाशाय प्रकटोऽभूद्गजाननः ।
देवैर्विप्रैः प्रजानाथ प्रार्थितो भक्तिलालसः ॥ १९॥

चतुर्थ्यां मध्यगे भानौ देहधारी समागतः ।

सा तिथिः परमा तस्य प्रीतिदा सम्बभूव वै ॥ २०॥

सूत उवाच ।
इति श्रुत्वा वचो रम्यं दक्षो हृष्टमना मुने ।
जगाद मुद्गलं विप्रं चतुर्थीज्ञानसिद्धये ॥ २१॥

दक्ष उवाच ।
का चतुर्थी तिथिः प्रोक्ता शुक्ला कृष्णा वद प्रभो ।
गणनाथप्रियाऽत्यन्तं बभूव कथमेव सा ॥ २२॥

पुनः पुनस्त्वया ब्रह्मन् कथितं तद् व्रतं शुभम् ।
अतो ब्रूहि चतुर्थ्यास्त्वं माहात्म्यं सकलं परम् ॥ २३॥

दक्षस्य वचनं श्रुत्वा हर्षयुक्तो महामुनिः ।
मुद्गलस्तमथोवाच चतुर्थीसम्भवां कथाम् ॥ २४॥

(Page खं. ४ अ. १ पान २)
मुद्गल उवाच ।
सङ्क्षेपेण प्रवक्ष्यामि चतुर्थ्याश्च चरित्रकम् ।
गणनाथप्रियं पूर्णं ज्ञास्यसि त्वं प्रजापते ॥ २५॥

पुरा सृष्टिं स सृष्ट्वा वै ब्रह्मा लोकपितामहः ।
स्थितानां तत्र जन्तूनां कालार्थं स दधे मनः ॥ २६॥

नानाकार्यप्रसिद्ध्यर्थं सञ्चिन्त्य गणपं हृदि ।
अभवद्ध्यानमास्थाय संस्थितश्चिन्तयान्वितः ॥ २७॥

ततस्तस्य शरीराद्वै निःसृता प्रकृतिः परा ।
महामाया तिथीनां सा जननी कामरूपिणी ॥ २८॥

चतुष्पदां तथा दक्ष चतुर्हस्तां सुशोभनाम् ।
चतुर्मुखयुतां वीक्ष्य हर्षितोऽभूत् प्रजापतिः ॥ २९॥

ततः सा तं नमस्कृत्य तुष्टाव जगदीश्वरम् ।
नानास्तोत्रैः प्रसाद्यैनमुवाच घननिःस्वना ॥ ३०॥

प्रकृतिरुवाच ।
तवाङ्गनिःसृतां मां त्वं विद्धि ब्रह्माण्डनायक ।
आज्ञां कुरु पितर्मां च कुर्वेऽहं भावयन्त्रिता ॥ ३१॥

स्थानं देहि तथा भक्ष्यं नानाभोगादिकं प्रभो ।
मह्यं देव दयासिन्धो नमस्ते परमेश्वर ॥ ३२॥

तस्यास्तद्वचनं श्रुत्वा तां जगाद प्रजापतिः ।
सृष्टिं गणेशं सञ्चिन्त्य विचित्रां कुरु मानदे ॥ ३३॥

स तस्यै गणनाथस्य ददौ मन्त्रं षडक्षरम् ।
सविधिं सा नमस्कृत्य ययौ तं वनमादरात् ॥ ३४॥

तताप तप उग्रं सा नासाग्रनयना सती ।
गणेशं हृदि सन्ध्याय जजाप मन्त्रमुत्तमम् ॥ ३५॥

प्रजापते गते वर्षसहस्रे तु गजाननः ।
आययौ तां महाभागामगदद्भक्तवत्सलः ॥ ३६॥

गणेश उवाच ।
वरान् वृणु महाभागे बहून् मनसि वाञ्छितान् ।
निराहारेण सन्तुष्टो ददामि तपसा च ते ॥ ३७॥

तस्य तद्वचनं श्रुत्वा हर्षिता प्रणनाम तम् ।
गजाननं प्रसम्पूज्य तुष्टाव च कृताञ्जलिः ॥ ३८॥

प्रकृतिरुवाच ।
नमस्ते विघ्ननाथाय गणेशाय परात्मने ।
अनाथाय विशेषेण सर्वनाथाय ते नमः ॥ ३९॥

नमो मूषकवाहाय मूषकध्वजिने नमः ।
स्वानन्दपतये तुभ्यं गणानां पतये नमः ॥ ४०॥

सिद्धिबुद्धिप्रदात्रे च सिद्धिबुद्धिविहारिणे ।
योगेशाय सदा शान्तिप्रदात्रे योगिने नमः ॥ ४१॥

सर्वादये सदा सर्वपूज्याय भक्तपालका ।
ज्येष्ठराजाय ज्येष्ठानां पतये ते नमो नमः ॥ ४२॥

ब्रह्मणे ब्रह्मदात्रे वै ब्रह्मणां पतये नमः ।
सिद्धेश्वराय देवानां दैत्यानां पतये नमः ॥ ४३॥

चतुर्भुजाय हेरम्ब परशोर्धारकाय ते ।
अङ्कुशन्धारिणे तुभ्यं निरङ्कुश नमो नमः ॥ ४४॥

रजसा सृष्टिकर्त्रे ते पालने सात्त्विकाय ते ।
तामसाय महाहन्त्रे गुणेशाय नमो नमः ॥ ४५॥

स्थावराय चरायैव चराचरमयाय ते ।
चराचरविहीनाय बोधाय च नमो नमः ॥ ४६॥

चतुर्विधस्वरूपाय चतुर्विधसुखप्रद ।
चतुःसुखस्वरूपाय स्वसंवेद्याय ते नमः ॥ ४७॥

विनायकाय सर्वेषां नायकाय नमो नमः ।
गजाननाय देवाय देवदेवेश ते नमः ॥ ४८॥

किं स्तौमि त्वां गणाध्यक्ष ब्रह्मणस्पतिरूपिणम् ।
यं स्तोतुं न समर्थाश्च योगिनो वेदमुख्यकाः ॥ ४९॥

तवदर्शनबोधेन तथापि संस्तुतो मया ।
तेन तुष्टो भव स्वामिन् भक्तिं देहि दृढां त्वयि ॥ ५०॥

इति स्तुत्वा गणेशानं दण्डवत् प्रणनाम तम् ।
तामुत्थाप्य गणाधीश उवाच व्रतमातरम् ॥ ५१॥

(Page खं. ४ अ. २ पान ३)
गणेश उवाच ।
वरं वृणु महाभागे यं यमिच्छसि शोभने ।
तं तं दास्यामि सुप्रीतो भक्त्या स्तोत्रेण तोषितः ॥ ५२॥

त्वया कृतमिदं स्तोत्रं सर्वसिद्धिप्रदं भवेत् ।
यः पठेच्छृणुयाद्देवि ईप्सितं लभते नरः ॥ ५३॥

एककालं द्विकालं वा त्रिकालं लभते सदा ।
अव्रती व्रतसाफल्यं पठनान्नात्र संशयः ॥ ५४॥

ब्रुवन्तं गणनाथं सोवाच गम्भीरनिःस्वना ।
देवी प्रणम्य भावेन साश्रुनेत्रा प्रजापते ॥ ५५॥

देव्युवाच ।
वरदोऽसि गणाधीश तदा देहि त्वयि स्थिराम् ।
भक्तिं मे च तथा कार्ये सामर्थ्यं करुणानिधे ॥ ५६॥

सृष्टिसर्जनसामर्थ्यं देहि नाथ नमोऽस्तु ते ।

सदा तव प्रियत्वं मे वियोगो न च ते भवेत् ॥ ५७॥

ओमित्युक्त्वा गणाधीशो जगाद् वदतां वरः ।
चतुर्विधप्रदा देवि प्रिया मम भविष्यसि ॥ ५८॥

तिथीनां मातृभावेन चतुर्थी संज्ञिता भव ।
वामभागे सदा कृष्णा शुक्ला दक्षिणभागके ॥ ५९॥

मम जन्मतिथिस्त्वं वै भविष्यसि न संशयः ।
सदा तव व्रते संस्थान् पालयामि विशेषतः ॥ ६०॥

मदीयव्रतजा पुण्या तिथिस्त्वं च भविष्यसि ।
व्रतेषु त्वत्समं नैव दायकं कुत्र वर्तते ॥ ६१॥

एवमुक्त्वा गणेशानोऽतर्धानं प्रचकार ह ।
व्रतमाता प्रजानाथाऽभवत्तत्रैव संस्थिता ॥ ६२॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते चतुर्थीतपोवर्णनं नाम प्रथमोऽध्यायः ॥ ४.१

## ४.२ शुक्लकृष्णचतुर्थीवरदानवर्णनं नाम द्वितीयोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
ततो देवी गणाध्यक्षं स्मृत्वा स्रष्टुं मनो दधे ।
ततोऽकस्माद् द्विधा साऽभूद्वामदक्षिणभागतः ॥ १॥

वामभागं कृष्णवर्णं दक्षिणाङ्गं तथा बभौ ।
शुक्लवर्णं महाभाग ततः सा विस्मिताऽभवत् ॥ २॥

पुनर्गणपतिं ध्यात्वा स्रष्टुं तत्रोपचक्रमे ।
ततस्तस्या मुखाम्भोजात् प्रतिपन्निःसृता तिथिः ॥ ३॥

नासिकायां द्वितीया वै वक्षसश्च तृतीयिका ।
अङ्गुलीभ्यस्तथा दक्ष पञ्चमी चाभवत्तिथिः ॥ ४॥

उत्पन्ना हृदयात् षष्ठी चक्षुषोः सप्तमी बभौ ।
अष्टमी बाहुदेशाच्च समुत्पन्ना महातिथिः ॥ ५॥

नवमी तिथिरुत्पन्ना उदराच्च प्रजापते ।

दशमी कर्णदेशाद्वै कण्ठाच्चैकादशी मता ॥ ६॥

द्वादशी पादयोस्तस्याः समुत्पन्ना तथा विभो ।
स्तनात् त्रयोदशी तस्या अहङ्काराच्चतुर्दशी ॥ ७॥

मनसः पूर्णिमा जाता अमावास्या तथाऽभवत् ।
जिह्वायाः सर्वभावेन तिथयो भिन्नतां दधुः ॥ ८॥

कृष्णा चतुर्थी प्रोक्ता या तस्याः कृष्णाः प्रकीर्तिताः ।
तिथयोः दशपञ्चाख्या ज्ञातव्या विबुधैः किल ॥ ९॥

शुक्लाः शुक्लचतुर्थी देहाच्चतुर्दश वै मताः ।
तिथयो विधिवत् सर्वा बभुः स्वस्वगुणान्विताः ॥ १०॥

दिनांशाः पुरुषा जाता रात्रयः स्त्रीस्वरूपकाः ।
स्वस्वभावविहारज्ञा बभूवुश्च हिते रताः ॥ ११॥

(Page खं. ४ अ. २ पान ४)
तिथिभिः सहिता देवी चतुर्थी तपसि स्थिता ।
गणेशमभजन्नित्यं मन्त्रध्यानपरायणा ॥ १२॥

वर्षेणैकेन विघ्नेशस्तां ययौ भक्तवत्सलः ।
शुक्लां मध्याह्नसमये कृष्णां चन्द्रोदये तथा ॥ १३॥

वरं ब्रूहि गणेशानस्तामुवाच विशेषतः ।
प्रणम्य विघ्नपं पूजयित्वा स्तुत्वा जगाद सा ॥ १४॥

चतुर्थ्युवाच ।
त्वदेकनिलयां देव मां कुरुष्व गजानन ।
नान्यं याचे वरं स्वामिन् भक्तिमिच्छामि शाश्वतीम् ॥ १५॥

तस्यास्तद्वचनं श्रुत्वा तां जगाद गजाननः ।
प्राप्तं चतुर्थि मध्याह्ने मदीयं दर्शनं त्वया ॥ १६॥

अतो मध्याह्नकालेऽन्ये मां भजन्ते शिवादयः ।
चतुर्थ्यां शुक्लपक्षस्य स्थितायां सर्वदा जनाः ॥ १७॥

मदीयव्रतमुख्यत्वे भव त्वं सर्वभावतः ।
निराहारेण मां तत्र त्वद्युक्तं पर्युपासते ॥ १८॥

चतुर्विधं प्रदास्यामि नानाभावनियन्त्रितम् ।

सञ्चितं नास्ति चेद्देवि तथाप्यत्र न संशयः ॥ १९॥

सञ्चितं चास्ति चेद्वापि ददासि त्वं महामते ।
अतस्ते नाम विख्यातं वरदेति भविष्यति ॥ २०॥

त्वां पूजयन्ति ये नैव मद्युक्तां व्रतभावतः ।
तेषां व्रतानि सर्वाणि निष्फलानि भवन्तु वै ॥ २१॥

एवमुक्त्वांऽतर्दधेऽसौ गणेशो देवनायकः ।
तदादि सा तिथिः ख्याता वरदा च प्रजापते ॥ २२॥

गणेशस्य प्रियाऽत्यन्तमिति जन्मतिथिः स्मृता ।
तस्यामुपोषणं कार्यं नरैरात्महितेप्सुभिः ॥ २३॥

पञ्चम्यां पारणं दक्ष कर्तव्यं द्विजसाक्षिकम् ।
चतुर्विधं फलं तैश्च सम्प्राप्तं नात्र संशयः ॥ २४॥

यद्यदिच्छति तत्तत् स लभते व्रतकारकः ।
अन्ते स्वानन्दगो भूत्वा सायुज्यं ब्रह्मणस्तथा ॥ २५॥

तत्र व्रते नराः पापा अन्नं भक्षन्ति चेत् प्रियम् ।
नारकास्ते भविष्यन्ति हीना अन्नैः पुनर्जनौ ॥ २६॥

एवं वरं चतुर्थ्यै स ददौ विघ्नविदारणः ।
सा तिथिः सर्वमान्या च बभूव व्रतमूलगा ॥ २७॥

ततः कृष्णां चतुर्थीं स जगाद गणनायकः ।
वरं वृणु महाभागे दास्यामि मनसीप्सितम् ॥ २८॥

श्रुत्वा सा तं प्रणम्याऽऽदौ पूजयित्वा गजाननम् ।
स्तुत्वा जगाद वाक्यं वै हर्षेण महता युता ॥ २९॥

कृष्णचतुर्थ्युवाच ।
यदि प्रसन्नभावेन वरदोऽसि गजानन ।
तदा भक्तिं दृढां देहि त्वदीयां मे महोदर ॥ ३०॥

त्वत्प्रियत्वं सदा नाथ वियोगो न भवेच्च मे ।
सर्वमान्यां कुरुष्व त्वदेकनिष्ठस्वभावतः ॥ ३१॥

तस्यास्तद्वचनं श्रुत्वा तां जगाद गजाननः ।
सदा मम प्रियाऽत्यन्तं भविष्यसि महातिथे ॥ ३२॥

चन्द्रोदये त्वयाऽहं वै प्राप्तस्तेन चतुर्थिके ।
तत् काले च व्रतं मुख्यं त्वद्युक्तं भवतु प्रियम् ॥ ३३॥

न वियोगो भवेद्भक्ताः प्रियेऽन्नजलवर्जिताः ।
उपासते च तेषां त्वं सङ्कष्टहरणं कुरु ॥ ३४॥

प्रहरान् पञ्च मद्भक्ताः प्रियेऽन्नजलवर्जिताः ।
उपासते च तेषां त्वं सङ्कष्टहरणं कुरु ॥ ३५॥

चतुर्विधं स्वसङ्कष्टं जन्म मृत्युश्च कर्मजम् ।
व्रतिनां तत्फलं कर्म विद्यते न कदाचन ॥ ३६॥

इत्यादि विविधं देवि विशेषेण चतुर्विधम् ।
(Page खं. ४ अ. २ पान ५)
सङ्कष्टदं हर त्वं वै मत्प्रसादाच्चतुर्थिके ॥ ३७॥

न सङ्कष्टं कदाचिद्वै व्रतकारि नरस्य च ।
भवेन् मे भक्तियुक्तस्य पुनस्त्वद्युक्तसेविनः ॥ ३८॥

इह भुक्त्वाऽखिलान् भोगानन्ते स्वानन्दमाप्नुयात् ।
सङ्कष्टहरणी नाम भवेत्तव चतुर्थिके ॥ ३९॥

न करोति चतुर्थीं चेन्नरो मद्भक्तिकारकः ।
निष्फलं सकलं तस्य भजनं वै भविष्यति ॥ ४०॥

त्वां त्यक्त्वा ये नराः पापा व्रतमन्यच्च कुर्वते ।
व्रतादिकं निष्फलकं तेषां सर्वं भविष्यति ॥ ४१॥

वर्णाश्रमस्थको भूत्वा चतुर्थीं न करोति चेत् ।
तस्य सर्वं स्वधर्मस्थं कर्म यन्निष्फलं भवेत् ॥ ४२॥

यती रात्रौ निराहारयुक्तः सन् व्रतमाचरेत् ।
सङ्कष्टहरणं देवि स्वानन्दार्थं न संशयः ॥ ४३॥

अन्यैश्च द्विजसंयुक्तैर्भोजनं द्विजसाक्षिकम् ।
रात्रौ कर्तव्यमेतस्मिन् मां प्रपूज्य वरानने ॥ ४४॥

श्रावणे लड्डुकान् भक्षेत् भाद्रके दधिभोजनम् ।
निर्जलं त्वाश्विने प्रोक्तं दुग्धपानं च कार्तिके ॥ ४५॥

मार्गशीर्षे जलाहारः पौषे गोमूत्रभक्षणम् ।
माघे मासि तिलान् शुक्लान् फाल्गुने घृतशर्कराम् ॥ ४६॥

पञ्चगव्यं मधौ मासे वैशाखे पद्मबीजकम् ।
ज्येष्ठे घृतं गवां भक्ष्यमाषाढे मधुभोजनम् ॥ ४७॥

यतीनां सर्वदा ह्येतत् व्रतं युक्तं प्रकीर्तितम् ।
अन्येषां भोजने नैवानेन वा व्रतकं स्मृतम् ॥ ४८॥

याममात्राऽवशिष्टायां रात्रावुत्थाय सत्वरम् ।
प्रातःकृत्यं सुसङ्क्षेपात् कर्तव्यं तन्नरेण वै ॥ ४९॥

तथा माध्याह्निकं कर्म कर्तव्यं प्रातरेव च ।
चतुर्घटिकरात्रौ सूर्योदयः स प्रकीर्तितः ॥ ५०॥

एवं कर्मादिकं कृत्वा मां सम्पूज्याल्पमन्त्रतः ।
प्रत्यक्षोदयकाले वै सूर्योपस्थानमाचरेत् ॥ ५१॥

चन्द्रोदयस्य पर्यन्तं शमीमूले जपं जपेत् ।
मदीयं मौनिभावेन पश्चात् स्नानं समाचरेत् ॥ ५२॥

सायाह्नकालजं कर्म तत्र कुर्यान्नरोत्तमः ।
विधिना पूज्य मां पश्चादर्घ्यदानं समाचरेत् ॥ ५३॥

आदौ तेऽर्घ्यप्रदानं च ततो मेऽर्घ्यनिवेदनम् ।
ततः सप्तार्घ्यदानं व्रती चन्द्राय समाचरेत् ॥ ५४॥

ब्राह्मणैः पूजितैर्देवि नरः कुर्याच्च भोजनम् ।
मोदकापूपलड्डूकपायसादिभिरादरात् ॥ ५५॥

रात्रौ जागरणं कुर्यान् मदीयकथयान्वितः ।
पञ्चम्यामुपचारैः सम्पूजयन् मां प्रयत्नतः ॥ ५६॥

एवं व्रतं नरः कुर्यात् स वै सर्वार्थसिद्धिभाक् ।
भविष्यत्यमरैर्मान्योऽते ब्रह्मणि लयं व्रजेत् ॥ ५७॥

यथाऽहं देवतादीनां पूज्यः सर्वाद्यभावतः ।
तथा त्वं व्रतजातीनामादिपूज्या भविष्यसि ॥ ५८॥

शुक्लां कृष्णां चतुर्थीं ये करिष्यन्त्यमरादयः ।
सर्वव्रतादि भावेषु तेषां सिद्धिर्भविष्यति ॥ ५९॥

एवमुक्त्वान्तर्दधेऽसौ गणेशो ब्रह्मनायकः ।
चतुर्थी भक्तिसंयुक्ताऽभवत्तत्रैव संस्थिता ॥ ६०॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते शुक्लकृष्णचतुर्थीवरदानवर्णनं नाम द्वितीयोऽध्यायः ॥ ४.२

## ४.३ प्रतिपदादिव्रतवर्णनं नाम तृतीयोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
ततो गणपतिर्दक्ष ययौ सर्वतिथीः प्रति ।
उवाच वृणुत प्राज्ञा वरं यं मनसीप्सितम् ॥ १॥

श्रुत्वा गणपतेर्वाक्यं प्रणम्य गणनायकम् ।
पूजयित्वा च तं स्तुत्वा जगदुस्तिथयः पराः ॥ २॥

प्रतिपदाद्या उचुः ।
यदि विघ्नेश्वर स्वामिन् वरदोऽसि गजानन ।
किं कर्तव्यं दयासिन्धो अस्माभिर्वद साम्प्रतम् ॥ ३॥

स्वस्वव्यापारजं देवं सामर्थ्यं देहि चाद्भुतम् ।
भक्तिं त्वदीयपादाब्जे सर्वं मान्यं त्वया प्रभो ॥ ४॥

तासां वचनमाकर्ण्य जगाद गणनायकः ।
ताः शृणु त्वं प्रजानाथ सर्वेषां हितकारकम् ॥ ५॥

गणेश उवाच ।
मदीया भक्तिरत्यन्तं भविष्यति न संशयः ।
भवतीनां महाभागास्तिथयः पुण्यभागिकाः ॥ ६॥

मत्कलांशसमुद्भूता देवास्तान् प्रीणयन्तु वै ।
भवतीभिर्युता देवा नराणां प्रीतिदाऽस्तु च ॥ ७॥

सदा वह्निं प्रतिपदि पूजयिष्यन्ति ये नराः ।
हुतद्रव्यैश्च हुत्वा तं दुग्धाहारा व्रते रताः ॥ ८॥

उपोषणं करिष्यन्ति तैश्च देवाः सहेश्वराः ।
तोषितास्ते सदा तेभ्यो दास्यन्ति मनसीप्सितम् ॥ ९॥

ते मृताः सङ्गमिष्यन्त्यग्निलोके भोगकारकाः ।
अग्नितुल्यप्रकाशेन विमानेन विहायसा ॥ १०॥

चरिष्यन्ति न सन्देहः प्रतिपद्व्रतकारकाः ।
ब्रह्मार्पणस्वभावेन गमिष्यन्ति मदात्मनि ॥ ११॥

द्वितीयायां नरो यस्तु पूजयेदश्विनौ शुभौ ।
पत्राहारसमायुक्तो रूपवान् जायते किल ॥ १२॥

इह भुक्त्वाऽखिलान् भोगानन्ते तल्लोकमाप्नुयात् ।
द्वितीयाव्रतकारी स देवमान्यो भविष्यति ॥ १३॥

ब्रह्मार्पणस्वभावेन द्वितीयाव्रतमाचरेत् ।
स स्वानन्दे मदीये वै लीनश्चैव भविष्यति ॥ १४॥

तृतीयायां महाशक्तिं पूजयेद्भक्तिसंयुतः ।
सर्वैः सौभाग्यदैर्द्रव्यैर्लवणाहारवर्जितः ॥ १५॥

स शक्तिलोकगो भूत्वा भोगयुक्तो भविष्यति ।
ब्रह्मार्पणतया सोऽपि मल्लोके चागमिष्यति ॥ १६॥

पञ्चम्यां नागमुख्यांश्च दुग्धेन स्नापयेन्नरः ।
पूजयेत्तान् प्रयत्नेन निरम्लाहारकारकः ॥ १७॥

स नागलोकगो भूत्वा भोगयुक्तश्चरिष्यति ।
निष्कामेन मदीये वै लोकेंऽते आगमिष्यति ॥ १८॥

षष्ठ्यां स्कन्दं फलाहारः पूजयेद्भक्तिसंयुतः ।
स्कन्दलोके चरेत् सोऽपि महाभोगपरायणः ॥ १९॥

निष्कामभावयुक्तश्चेत् स्वानन्देंऽते गमिष्यति ।
शुक्लगत्याः क्रमेणैव सर्वभावनियन्त्रितः ॥ २०॥

सप्तम्यामर्चयेत् सूर्यमुपोषणपरायणः ।
स सूर्यलोकमाश्रित्य प्रचरेद्भोगसंयुतः ॥ २१॥

निष्कामव्रतकारी चेन् महालयसमुत्थिते ।
स्वानन्दे मे सदेहो वै ब्रह्मभूतो भविष्यति ॥ २२॥

अष्टम्यां मातृकानां यः पूजको भावसंयुतः ।
बिल्वाहारसमायुक्तो मातृकालोकगो भवेत् ॥ २३॥

मदर्पणस्वभावेन सदा व्रतपरायणः ।
अष्टम्यां सोऽपि मल्लोके गच्छेत् क्रमविनिश्चिते ॥ २४॥

नवम्यामेव दुर्गायाः पूजनं यः समाचरेत् ।
पिष्टाशी भोगसंयुक्तोऽते तल्लोकमवाप्नुयात् ॥ २५॥

(Page खं. ४ अ. ३ पान ७)
ब्रह्मार्पणतया सोऽपि निजलोके गमिष्यति ।
शुक्लगत्या महाभागो ब्रह्मभूतो न संशयः ॥ २६॥

दशम्यां व्रतसंस्थो यो दधिभक्षणसंयुतः ।
दिशां दिगीशकानां वै पूजकस्तत्प्रियो भवेत् ॥ २७॥

इह भुक्त्वाऽखिलात् भोगानन्ते तल्लोकमाप्नुयात् ।
निष्कामव्रतभावेन ब्रह्मभूतो भविष्यति ॥ २८॥

एकादश्यां नरो भक्षेद्वह्निपक्वविवर्जितम् ।
धनपं पूजयेच्चैव भक्तियुक्तेन चेतसा ॥ २९॥

स वै तस्य वसेल्लोके नानाभोगकरः सदा ।
ब्रह्मार्पणतया तद्वद्व्रतं कृत्वा सुखी भवेत् ॥ ३०॥

विष्णुं सम्पूजयेद्यो वै द्वादश्यां घृतभोजनः ।
स विकुण्ठे वसेन्नित्यं नानाभोगपरायणः ॥ ३१॥

ब्रह्मार्पणविधानेन व्रतं कुर्याद्यदा नरः ।
महालये मदीये स लोके ब्रह्ममयो भवेत् ॥ ३२॥

धर्मं त्रयोदशीसंस्थं पूजयेत् क्षीरभोजनः ।
स धर्मलोकगो भूत्वा भुञ्जीत विविधं सुखम् ॥ ३३॥

ब्रह्मार्पणतया येन साधिता चेत् त्रयोदशी ।
स स्वानन्दे समागम्य ब्रह्मभूतो भविष्यति ॥ ३४॥

चतुर्दश्यां शिवं यश्च पूजयेद्भक्तिसंयुतः ।
उपोषणसमायुक्तो गोधूमान्नेन पारणम् ॥ ३५॥

करिष्यति च कैलासे वासस्तस्य भविष्यति ।
निष्कामश्चेत्तदन्ते स मल्लोके मन्मयो भवेत् ॥ ३६॥

पूर्णिमायां देवगणान् देवांश्चद्रमसं तथा ।
पूजयेद्भक्तिभावेन चन्द्रलोकं स आप्नुयात् ॥ ३७॥

इह भुक्त्वाऽखिलान् भोगानन्ते देवान् गमिष्यति ।
निष्कामनो मदीये स लोके ब्रह्ममयो भवेत् ॥ ३८॥

उपोषणसमायुक्तोऽर्घ्यदानं यः करिष्यति ।
चन्द्राय निशिभुग् वाऽपि सर्वदेवपरायणः ॥ ३९॥

सर्वदेवमयी रम्या पूर्णिमा परिकीर्तिता ।
चान्द्री चैव तथा ज्ञेया तिथिः पुण्यप्रदा मता ॥ ४०॥

अमायां तर्पयेद्यो वै पितृन् पितृपरायणः ।
उपोषणं वा कुर्वीत स सर्वार्थमवाप्नुयात् ॥ ४१॥

अन्ते पितृमये लोके वसतिस्तस्य सम्भवेत् ।
आगमिष्यति निष्कामश्चेत् स्वानन्दे स तल्लये ॥ ४२॥

कृष्णाः शुक्लाः सदा पूज्यास्तिथयो व्रतकारिणा ।
एवं भावयुतेनैव स सर्वार्थमवाप्नुयात् ॥ ४३॥

मत्प्रियास्तिथयः सर्वा भविष्यथ न संशयः ।
मत्कलांशयुतैर्देवैः संयुक्ताः प्रभवेत वै ॥ ४४॥

चतुर्थीं ये न कुर्वन्ति तेषां सर्वं निरर्थकम् ।
भवदीयव्रते संस्थं भविष्यति न संशयः ॥ ४५॥

अतश्चतुर्थीसंयुक्ताः सदा भवत मानदाः ।
तिथयः कालमानेन सर्वपूज्या भविष्यथ ॥ ४६॥

एवमुक्त्वांऽतर्दधेऽसौ गणेशो गणवल्लभः ।
तथा जातं प्रजानाथ तिथियुक्तव्रतं सदा ॥ ४७॥

चतुर्थीजं च माहात्म्यं तिथीनां यद्विशेषतः ।
शृणुयाद्यः पठेद्वाऽपि स सर्वार्थमवाप्नुयात् ॥ ४८॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते प्रतिपदादिव्रतवर्णनं नाम तृतीयोऽध्यायः ॥ ४.३

(Page खं. ४ अ. ४ पान ८)

## ४.४ दशरथव्रतोपदेशो नाम चतुर्थोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
अधुना शृणु दक्ष त्वं संवादं तं पुरातनम् ।
दशरथस्य राजर्षेर्वसिष्ठस्य महात्मनः ॥ १॥

येन त्वं तिथिमुख्यायाश्चतुर्थ्या व्रतजे परे ।
महिम्नि निपुणोऽत्यन्तं सम्भवेर्ब्रह्मपुत्रक ॥ २॥

महायशा दशरथो वन्ध्यदोषभयार्दितः ।
वसिष्ठं शरणं गत्वा नत्वा पप्रच्छ तं मुनिम् ॥ ३॥

दशरथ उवाच ।
पुत्रप्राप्त्यर्थमेवं भो वदोपायं महामुने ।
शिष्यं मां शाधि भावज्ञ तारयस्व भवार्णवात् ॥ ४॥

ततस्तं मुनिशार्दूल उवाच नृपमुत्तमम् ।
कुलदेवं गणेशं ते भजस्व व्रतसंयुतः ॥ ५॥

वसिष्ठस्य वचः श्रुत्वा पुनस्तं प्रणनाम ह ।
पप्रच्छ विनयेनैव संयुतः स नृपोत्तमः ॥ ६॥

कीदृशं तद्व्रतं विप्र गणेशस्य महात्मनः ।
कृतं केन व्रतं तत्र भवेत् सिद्धिश्च कीदृशी ॥ ७॥

कस्मिन् काले व्रतं कार्यं पूजनं कीदृशं मुने ।
वद सर्वं विशेषेण करिष्यामि त्वदाज्ञया ॥ ८॥

वसिष्ठ उवाच ।
चतुर्थी गणनाथस्य प्रियाऽत्यन्तं नृपोत्तम ।
शुक्ला कृष्णा समाख्याता सर्वसिद्धिप्रदा भवेत् ॥ ९॥

चन्द्रोदये यदा प्राप्ता कृष्णा सैव चतुर्थिका ।
सा सङ्कष्टहरा प्रोक्ता चतुर्विधफलप्रदा ॥ १०॥

चतुर्विधं जगत् सर्वं जानीहि त्वं नृपात्मज ।

सङ्कष्टं तत् समाख्यातं बन्धनेन विशेषतः ॥ ११॥

इह भुक्त्वाऽखिलान् भोगान् सङ्कष्टीकरणान्नृप ।
सर्वसङ्कटहीनः स स्वानन्दे प्रगमिष्यति ॥ १२॥

यदा चन्द्रोदये भूप चतुर्थी नैव लभ्यते ।
प्रदोषव्यापिनी ग्राह्या सर्वसङ्कटमुक्तये ॥ १३॥

उभये चन्द्रसंयुक्ता प्राप्ता सा व्रतधारिणी ।
तदा स्वेच्छाविहारेण कर्तव्या चन्द्रव्यापिनी ॥ १४॥

तृतीयायां प्रदोषाच्च चन्द्रस्योदयगा भवेत् ।
तदा सैव सदा ग्राह्या परां त्यक्त्वा विशेषतः ॥ १५॥

शुक्ला सा वरदा प्रोक्ता चतुर्णां नात्र संशयः ।
सञ्चिताऽसञ्चितानां वै व्रतकारिजनाय च ॥ १६॥

धर्मार्थकाममोक्षाद्याश्चत्वारो ये पदार्थकाः ।
तान् ददाति गणेशस्य प्रीतिदा सा चतुर्थिका ॥ १७॥

मध्याह्नव्यापिनी ग्राह्या सदा शुक्लचतुर्थिका ।
उभयत्र यदा नाप्ता पूर्वविद्धा मता तिथिः ॥ १८॥

उभयत्र यदा प्राप्ता भवेत् प्रहरभानुगा ।
तृतीया चेत्तदा साऽपि पूर्वविद्धा मता तिथिः ॥ १९॥

प्रहरादूर्ध्वगा भूप तृतीया सूर्यसंयुता ।
तदा पूर्वा परा वाऽपि कार्या सैव चतुर्थिका ॥ २०॥

चतुर्थीव्रतहीनस्य फलहीनानि भूमिप ।
व्रतानि सर्वकालेष्वाद्या कार्या सा ततः प्रभो ॥ २१॥

एतद्व्रतं महाभाग ब्रह्मणाऽऽचरितं पुरा ।
व्रतस्यैव प्रभावेण निर्ममे सकलं जगत् ॥ २२॥

विष्णुना शङ्करेणैव कृतं व्रतमनुत्तमम् ।
पालने हरणे देवौ समर्थौ तौ बभूवतुः ॥ २३॥

योगिभिः शुकमुख्यैश्च कश्यपादिमुनीश्वरैः ।
मुनिभिश्च कृतं पूर्वं स्वस्वकार्यार्थसिद्धये ॥ २४॥

इह भुक्त्वाऽखिलान् भोगानन्ते स्वानन्दगा बभुः ।
नानेन सदृशं विद्धि चतुर्णां साधकं नृप ॥ २५॥

अन्यैर्नानाविधैरेतत् कृतं वर्णाश्रमस्थितैः ।
(Page खं. ४ अ. ५ पान ९)
ते सर्वे ब्रह्मभूता वै ययुः स्वानन्दके पुरे ॥ २६॥

एतद् व्रतं महीपाल कुरु त्वं भावसंयुतः ।
भविताऽसि सपुत्रश्च तथा स्वानन्दगो भवेः ॥ २७॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते दशरथव्रतोपदेशो नाम चतुर्थोऽध्यायः ॥ ४.४

## ४.५ चतुर्थीविवेकवर्णनं नाम पञ्चमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दशरथ उवाच ।
ब्रह्मादिभिः कथं विप्र चतुर्थीगं व्रतं कृतम् ।
गणनाथप्रियं पूर्णं वद सर्वं प्रविस्तरात् ॥ १॥

दक्ष उवाच ।
वद मुद्गल माहात्म्यं चतुर्थ्यास्त्वं प्रविस्तरात् ।
श्रुत्वा कथां महारम्यां न तृप्यामि मुनीश्वर ॥ २॥

दक्षस्य भक्तिसंयुक्तं वाक्यं श्रुत्वा महामुनिः ।
जगाद तं विशेषज्ञो मुद्गलः शृणु शौनक ॥ ३॥

वचनं नृपवर्यस्य श्रुत्वा दशरथस्य च ।
जगाद तं मुनिश्रेष्ठो वसिष्ठः सर्ववित् प्रभुः ॥ ४॥

वसिष्ठ उवाच ।
कदाचित् प्रलये वृत्ते नष्टं स्थावरजङ्गमम् ।
पञ्चभूतमयं सर्वं व्यवस्थासंयुतं पुरा ॥ ५॥

शून्यवत् सर्वभावैस्तद्धीनं ब्रह्ममयं बभौ ।
योगनिद्रा गणेशस्य सैव वेदे प्रकथ्यते ॥ ६॥

पुनः स कस्मिंश्चित्काले वेदवाग्भिः प्रबोधितः ।

गणेशो निर्ममे सर्वं तत्त्वैस्तत्त्वप्रधारकः ॥ ७॥

त्रिगुणेभ्यः समुत्पन्ना देवाः पञ्च नृपेश्वर ।
ब्रह्मा विष्णुः शिवः शक्तिः सूर्यः सर्वधरा बभुः ॥ ८॥

तैस्तपश्चरितं घोरमेकाक्षरविधानतः ।
तपसा गणनाथस्तु प्रसन्नः प्रबभूव ह ॥ ९॥

हृदये दर्शयामास स्वात्मानं सर्वदं परम् ।
तेन ज्ञानयुता जाता देवाः पञ्च नरेश्वर ॥ १०॥

तैश्च सम्प्रार्थितो योगी भृशुण्डी सर्वपारगः ।
तेन सम्प्रेषिता देवा आययुर्नगरे निजे ॥ ११॥

कर्मभूमौ गणेशस्य क्षेत्रं स्वानन्दवाचकम् ।
वेदैः सन्दर्शितं स्थापयामासुस्तत्र विघ्नपम् ॥ १२॥

यस्मिन् काले च देवेशैः स्थापिता मूर्तिरादरात् ।
तस्मिन् काले चतुर्थी सा भाद्री शुक्ला बभूव ह ॥ १३॥

मध्याह्नसमये संस्था सा मुख्या प्रबभूव ह ।
तत आराधितस्तैः स गणराजो विशेषतः ॥ १४॥

माघमासे सिते पक्षे चतुर्थ्यां राजसत्तम ।
प्रकटोऽभूत् पुरस्तेषां वरदाता गजाननः ॥ १५॥

वरप्रसादेन तस्य निर्मितं सकलं जगत् ।
देवेशैः सा तिथिर्मुख्या बभूव वरदायिनी ॥ १६॥

ब्रह्मादिभिश्च सर्वेभ्य उपदिष्टा चतुर्थिका ।
आदौ काले तथा तत्र ज्येष्ठी मुख्या बभूव सा ॥ १७॥

ज्येष्ठशुद्धचतुर्थ्यां तद्व्रतदानं कृतं पुरा ।
तस्मिन् काले धृता सर्वैः सद्यः सा वरदायिनी ॥ १८॥

अतो मुख्यत्वमापन्ना ज्येष्ठी माघी च भाद्रिका ।
चतुर्थी नृपशार्दूल शुक्लपक्षेषु सर्वदा ॥ १९॥

तत्र भाद्रपदे मासे चतुर्थी या महामते ।
शुक्ला साऽत्यन्तभावेन मुख्या जाताऽद्य भावतः ॥ २०॥

(Page खं. ४ अ. ५ पान १०)
चतुर्थी समभावेन न किञ्चिद्वर्तते व्रतम् ।
अतः किं वर्णनीयं वै तदौपम्यं तदेव च ॥ २१॥

भाद्रे चतुर्थी या शुक्ला साधिता सा नरेण चेत् ।
स द्वादशचतुर्थीसम्भवं पुण्यं समाप्नुयात् ॥ २२॥

अङ्गारकयुता भूप सा नरेण कृता भवेत् ।
चतुर्थी षोडशभवं पुण्यं प्राप्तं न संशयः ॥ २३॥

नरेण धीमता सा चेद्यदि चन्द्रयुता कृता ।
चतुर्थी विंशतिभवं फलं प्राप्तं महामते ॥ २४॥

यदि स्वातियुता भूप चन्द्रवारेण चेत्कृता ।
प्राप्तं चतुर्विंशतिचतुर्थीजं किल पुण्यकम् ॥ २५॥

माघे शुक्लचतुर्थी सा कृता चेन्नात्र संशयः ।
अष्टानां च चतुर्थीनां फलं प्राप्तं नरेण तत् ॥ २६॥

अङ्गारकयुता चेद्वै साधिता सा नरेण च ।
द्वादशानां चतुर्थीनां पुण्यं प्राप्तं व्रतोद्भवम् ॥ २७॥

ज्येष्ठे शुक्लचतुर्थीं यः करोति व्रतधारकः ।
चतुश्चतुर्थीजं पुण्यं लभते स नराधिप ॥ २८॥

अङ्गारकयुता चेद् द्वादशभिः समतां व्रजेत् ।
नरेण सा प्रयत्नेन कर्तव्या सर्वदायिका ॥ २९॥

अन्येषु श्रावणाद्येषु चतुर्थी वरदा कृता ।
धर्मार्थकाममोक्षाणां दात्री शास्त्रेषु सम्मतम् ॥ ३०॥

तत्र श्रावणमासे या चतुर्थी वरदा मता ।
द्विचतुर्थीभवं पुण्यं ददाति व्रतकारिणे ॥ ३१॥

चतुर्थ्या महिमाऽनन्तोऽशक्यो वर्णयितुं भवेत् ।
चतुःपदप्रदा प्रोक्ता सा कथं वर्ण्यते मया ॥ ३२॥

अधुना शृणु राजेन्द्र कृष्णपक्षे समागताम् ।
चतुर्थीं सर्वदां पुण्यां सङ्कष्टहरिणीं शुभाम् ॥ ३३॥

चतुर्विधं च सङ्कष्टं प्राप्तं सर्वैर्नराधिप ।

जन्ममृत्युव्यवस्थाख्यं चतुर्थं कर्मजं फलम् ॥ ३४॥

इत्यादिबहवो भेदाः कथनं नैव शक्यते ।
चतुर्विधं जगत् सर्वं पञ्चमं ब्रह्म उच्यते ॥ ३५॥

चतुर्विधं सुसङ्कष्टं व्रतमात्रेण हन्ति या ।
सङ्कष्टहरिणी प्रोक्ता चतुर्थी कृष्णपक्षगा ॥ ३६॥

तस्यापि महिमानं कः क्षमो वर्णयितुं भवेत् ।
सर्वसिद्धिप्रदायास्तु व्रताचरणमात्रतः ॥ ३७॥

माघमासे कृताऽऽदौ च ब्रह्मणा विश्वयोनिना ।
अतः सा मुख्यतां प्राप्ताऽष्टचतुर्थीव्रतैः समा ॥ ३८॥

अङ्गारकयुता तत्र विंशत्या समतां व्रजेत् ।
साधिता व्रतभावेन चेन्नरेण नराधिप ॥ ३९॥

श्रावणे या समाख्याता चतुर्थी कृष्णपक्षगा ।
चतुश्चतुर्थीतुल्या सा भवत्यत्र न संशयः ॥ ४०॥

ब्रह्मणा चोपदिष्टा वै श्रावणे सा ततोऽधिका ।
आदौ देवमुनीन्द्रेभ्यः सर्वसङ्कष्टहारिणी ॥ ४१॥

भाद्रमासे नराधीश चतुर्थी कृष्णपक्षगा ।
चतुश्चतुर्थीतुल्या सा शृणु कारणमत्र वै ॥ ४२॥

देवानां गणनाथश्च वरदः सम्बभूव ह ।
व्रतमात्रेण तस्मात् सा मुख्या जाता न संशयः ॥ ४३॥

अङ्गारकयुता कुत्र सम्प्राप्ता चेत् सुसिद्धिदा ।
द्वादशव्रतजं पुण्यं ददाति व्रतकारिणे ॥ ४४॥

शुक्ला कृष्णा सदा कार्या चतुःपदसुसिद्धये ।
अन्यथा सिद्धिहीनानि प्रभवन्ति व्रतानि च ॥ ४५॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
चतुर्थे खण्डे गजाननचरिते चतुर्थीविवेकवर्णनं नाम पञ्चमोऽध्यायः ॥ ४.५

(Page खं. ४ अ. ६ पान ११)

## ४.६ चन्द्रदर्शनदोषहरणचरितवर्णनं नाम षष्ठोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दशरथ उवाच ।
अङ्गारकयुता स्वामिन् कथं श्रेष्ठा बभूव सा ।
तन्मे ब्रूहि विशेषेण संशयोऽत्र महांश्च मे ॥ १॥

वसिष्ठ उवाच ।
भरद्वाजात् समुत्पन्नः पृथ्व्यां भौमो महामतिः ।
गणानां त्वेतिमन्त्रेण पूजयामास विघ्नपम् ॥ २॥

ततापि स तपो रम्यं ध्यात्वा देवं गजाननम् ।
पारिनेराच्च नगरात् पश्चिमे वनसंस्थितः ॥ ३॥

शतवर्षैर्गणाध्यक्षः प्रसन्नस्तं ययौ नृप ।
वरं ब्रूहि महाभाग भूमिपुत्रेति सोऽब्रवीत् ॥ ४॥

ततो भौमो गणाधीशं पूजयन् भक्तिभावतः ।
स्तुत्वा तं स जगादेति वरं सर्वसुखप्रदम् ॥ ५॥

नरदेहेन युक्तोऽहं तथापि गणनायक ।
इच्छामि चामृतं पातुं ग्रहं मां कुरु मानद ॥ ६॥

तव भक्त्येकनिलयं नाम्ना मङ्गलसंज्ञकम् ।
ऋणहर्तारमेवं मां प्रभो कुरु धनप्रदम् ॥ ७॥

माघकृष्णचतुर्थ्यां यद्दर्शनं ते मया कृतम् ।
मया युक्ता ततो देवी महापुण्यप्रदाऽस्तु सा ॥ ८॥

तथेति गणनाथेन कृतं सर्वं नराधिप ।
अतोंऽगारयुता पुण्या चतुर्थी मुख्यतां गता ॥ ९॥

अधुना चेतिहासं ते कथयामि विशेषतः ।
भाद्रशुक्लचतुर्थ्यां वै न द्रष्टव्यो निशाकरः ॥ १०॥

तत्र ते कारणं सर्वं कथयामि सविस्तरम् ।
येन दोषविहीनस्त्वं गणेशं भजसे नृप ॥ ११॥

एकदा देवसंयुक्तैर्मुनिभिश्चैव निश्चितम् ।

गणेशांशसमुद्भूताः पञ्च देवा न संशयः ॥ १२॥

ते गणेशस्वरूपाद्वै कदा भिन्ना भवन्ति न ।
तेषां स्मरणमात्रेण सन्तुष्टो गणनायकः ॥ १३॥

भविष्यति न सन्देहस्तस्मादादौ मुनीश्वराः ।
शिवादीन् पूजयत च तेन सिद्धिमवाप्स्यथ ॥ १४॥

एवं ज्ञानबलेनाज्ञैः कृतं देवैः सहर्षिभिः ।
पञ्चभिर्विष्णुमुख्यैस्तत्तथेति प्रतिपादितम् ॥ १५॥

ततः सर्वे मुनिगणाश्चक्रुस्ते तादृशीं क्रियाम् ।
तया सिद्धिविहीनास्ते भ्रान्ताः सर्वे बभूविरे ॥ १६॥

समागता देवगणैः ब्रह्माणं तुष्टुवुर्नृप ।
वृत्तान्तं कथयामासुः सोऽपि चिन्तातुरोऽभवत् ॥ १७॥

सस्मार शिवमुख्यांश्च ब्रह्माणं ते समाययुः ।
विष्णुः शिवोऽर्यमा शक्तिस्तेऽपि श्रुत्वा सुविस्मिताः ॥ १८॥

एतस्मिन्नन्तरे तत्र शब्दः सर्वभयङ्करः ।
बभूव तीव्रघोषेण युक्तः प्रलयसूचकः ॥ १९॥

शब्दं श्रुत्वा भयोद्विग्ना बभूवुः शम्भुमुख्यकाः ।
ततोऽकस्मान् महाभीमः पुरुषः प्रकटोऽभवत् ॥ २०॥

विकरालं च तं दृष्ट्वा मुमूर्च्छुः शङ्करादयः ।
मुनयो देवताः केऽपि पलायन्त च मूर्च्छिताः ॥ २१॥

मुहूर्तमात्रकाले वै गते ब्रह्मादयः सुराः ।
सावधाना बभूवुस्तं ददृशुः पुरतः स्थितम् ॥ २२॥

ततोऽतिभयसंयुक्तास्तुष्टुवुर्गणनायकम् ।
ध्यात्वा हृदि महद्रूपं गजवक्त्रादिचिह्नितम् ॥ २३॥

ब्रह्माद्या ऊचुः ।
नमस्ते गणनाथाय विघ्नानां पतये नमः ।
अनाथानां सुनाथाय नमो विघ्ननिवारण ॥ २४॥

भक्तेभ्यः सर्वदात्रे ते निराकाराय साक्षिणे ।
अमेयायाप्रतर्क्याय हेरम्बाय नमो नमः ॥ २५॥

गजाननाय देवाय शूर्पकर्णाय ते नमः ।
महोदराय सर्वेषामादिपूज्याय वै नमः ॥ २६॥

(Page खं. ४ अ. ६ पान १२)
सर्वादये महादात्रे सर्वपूज्याय वै नमः ।
सर्वभावस्थितायैव ढुण्ढिराजाय ते नमः ॥ २७॥

स्वानन्दवासिने तुभ्यं योगशान्तिमयाय च ।
योगिभ्यो योगदात्रे वै योगानां पतये नमः ॥ २८॥

सृष्टिकर्त्रे च पात्रे ते सृष्टिहर्त्रे नमो नमः ।
गणेशाय गुणानां वै चालकाय नमो नमः ॥ २९॥

आत्मनेऽनात्मने चैव कारणानां प्रकाशिने ।
ब्रह्मेशाय सदानाथ देवपालकरूपिणे ॥ ३०॥

निवारय महाविघ्नं सहसा समुपस्थितम् ।
ग्रसिष्यति न चेदण्डमस्मान् वै नात्र संशयः ॥ ३१॥

त्वदीयपादपद्मस्य वयं दासा गजानन ।
मरिष्यामो यदा नाथ यशस्तव गतं तदा ॥ ३२॥

अधुना रक्ष देवेश न वयं द्रष्टुमुग्रकम् ।
क्षमा गच्छन्ति नः प्राणा रक्ष विघ्नेश रक्ष भोः ॥ ३३॥

एवं संस्तुवतां तेषां पुरः सोऽपि महापुमान् ।
गणेशाकाररूपेण बभूव नृपसत्तम ॥ ३४॥

ततस्ते तं प्रणेमुश्च पूजयामासुरादरात् ।
मानसीं स्वसुतां तस्मै ददुः सर्वे शिवादयः ॥ ३५॥

सरस्वतीं ददौ ब्रह्मा विष्णुः पुष्टिं च मानसीम् ।
योगिनीं शङ्करश्चैव मोहिनीं जगदम्बिका ॥ ३६॥

सञ्जीवनीं ददौ तस्मै भानुः सर्वप्रियङ्करः ।
एवं सम्पूज्य विघ्नेशं प्रणतास्ते महीपते ॥ ३७॥

उवाच तान् स उत्थाप्य विघ्नेशो भक्तिभावतः ।
विष्णुमुख्यान महेशांश्च मेघगम्भीरनिःस्वनः ॥ ३८॥

श्रीगणेश उवाच ।
शम्भुमुख्याः शृणुत च देवेन्द्रा मुनिमुख्यकाः ।
मदीयांशा भवन्तोऽपि गर्वं मा कुरुत प्रियाः ॥ ३९॥

चराचरं मदीयांशं मद्रहितं न किञ्चन ।
तेभ्यः सिद्धिप्रदानार्थं देहधारी भवाम्यहम् ॥ ४०॥

यदि ज्ञानेन मां त्यक्त्वा पूजयेत् तृणरूपकम् ।
तेनाऽहं किं महादेवाः पूजितो वदत प्रियाः ॥ ४१॥

तत्रांशो वर्तते किञ्चिन् मदीयस्तत् समा च मे ।
तृप्तिर्जाता न सन्देहः पूर्णस्तृप्तो भवामि न ॥ ४२॥

भवन्तोऽपि तथा विप्रैः कलांशाः पूजिता यदि ।
कलांशरूपा मे तृप्तिस्तेन जाता गुणात्मिका ॥ ४३॥

ब्रह्माण्डे पूजिते पूर्णे न तृप्तोऽहं भवामि च ।
अनन्तानि मदीयेषु ब्रह्माण्डानि स्वलोमसु ॥ ४४॥

गजवक्त्रादिचिह्नेन चिह्नितोऽहं महेश्वरः ।
जगद्ब्रह्ममयस्तत्र तिष्ठामि योगशान्तिदः ॥ ४५॥

तस्य पूजनमात्रेण जगद्ब्रह्म सुपूजितम् ।
अहं तयोश्च योगे वै पूर्णः सम्पूजितो मतः ॥ ४६॥

मां त्यक्त्वा ज्ञानमोहेन मोहिता मुनिदेवताः ।
भवतां पूजनं चक्रुः सर्वादौ विघ्नसंयुताः ॥ ४७॥

तत्रापि मदसंयुक्ता भवन्तस्तादृशात्मकाः ।
सिद्धिहीनास्ततो जाताः पुनर्मा कुरुत त्विदम् ॥ ४८॥

पूर्वस्मिंश्च भवद्भिर्वै सेवितो भक्तिसंयुतैः ।
अतःसहामि देवेशा दत्तं वो दर्शनं मया ॥ ४९॥

कलांशमात्रेण यदि सन्तुष्टोऽहं भवामि चेत् ।
तदा देहधरः कस्मात् स्थास्यामि वदत प्रियाः ॥ ५०॥

एवमुक्त्वा गणाधीशो विरराम महीपते ।
तेऽपि प्रणम्य विघ्नेशं स्वदोषं प्रक्षमापयन् ॥ ५१॥

एतस्मिन्नन्तरे तत्र चन्द्रः शङ्करभालगः ।

जहास विवृतैर्दन्तैर्गणेशं रूपगर्वितः ॥ ५२॥

उवाच मोहितोऽत्यन्तं प्रणम्य गणनायकम् ।
(Page खं. ४ अ. ६ पान १३)
गजवक्त्रयुतं रूपं किं धृतं विकटं प्रभो ॥ ५३॥

पुनः पुनरुवाचेदं वाक्यं हास्यपरायणः ।
ततस्तं कुपितो देवः शशाप शशलाञ्छनम् ॥ ५४॥

ये त्वां विलोकयन्ते वै चन्द्र ते पापिनः सदा ।
भवन्तु विघ्नसंयुक्ता मद्वाक्यान्नात्र संशयः ॥ ५५॥

एवमुक्त्वान्तर्दधेऽसौ गणेशो ब्रह्मनायकः ।
भार्याभिः सहितो भूप चन्द्रश्च मलिनोऽभवत् ॥ ५६॥

अहङ्कारविहीनास्ते जाताः शम्भ्वादयः सुराः ।
तदारभ्य महाभाग गाणपत्या विशेषतः ॥ ५७॥

वेदज्ञाऽहङ्कृतिः पूर्णा ब्रह्मणो हृदि संस्थिता ।
तया मदयुतो ब्रह्मा भवत्येवं पुनः पुनः ॥ ५८॥

सरस्वती सा दत्ता वै गणेशाय महात्मने ।
तया युक्तः सदा रेमे ब्रह्मणो हृदि विघ्नपः ॥ ५९॥

हृदि स्थिते गणेशे स कथं मोहयुतो भवेत् ।
सदा तं भजते भक्त्या गाणपत्यस्वभावतः ॥ ६०॥

सर्वपोषणता तद्वद्विष्णोर्हृदि समास्थिता ।
तत् सामर्थ्यविमोहेन गर्वं गच्छति केशवः ॥ ६१॥

तां ददौ विघ्नराजाय पुष्टिं विश्वस्य पोषिणीम् ।
तया युक्तो गणेशानो रेमे विष्णोः सदा हृदि ॥ ६२॥

सोऽपि तं भजते नित्यं गाणपत्यविचारवित् ।
हृदिस्थे स कथं मोहं प्राप्नोति नृप विघ्नपे ॥ ६३॥

योगेन मोहहीनत्वं सदा शम्भोर्हृदि प्रभो ।
तेनाहङ्कारभावेन मन्यते किं न शङ्करः ॥ ६४॥

तामेव योगिनीं देवीं हृदिस्थां प्रददौ शिवः ।
गणेशस्तु तया युक्तो रेमे शम्भोर्हृदि स्थितः ॥ ६५॥

गणेशे हृदि संस्थे स मोहं नैव प्रपद्यते ।
सदा गाणेशको भूत्वा भजते गणनायकम् ॥ ६६॥

वृष्ट्या दानप्रदाने वै करोति स दिवाकरः ।
सर्वेषां जीवनं तेन धृतं कर्ममयं नृप ॥ ६७॥

तदेव हृदये तस्य वर्ततेऽहंस्वभावतः ।
तां सञ्जीवनिकां सूर्यो ददौ विघ्नेश्वराय च ॥ ६८॥

तया युक्तो गणाधीशः सदा हृदि स खेलति ।
भानोस्तेन रविस्तं स भजतेऽनन्यचेतसा ॥ ६९॥

शक्तिर्हृदयगां देवीं मोहिनीं सर्वमोहिनीम् ।
ददौ विघ्नेश्वरायैव शक्तिभावसमन्विताम् ॥ ७०॥

तया युक्तो गणेशानस्तस्या हृदि विशेषतः ।
तेन खेलति सा देवी भजते गणनायकम् ॥ ७१॥

इत्यहङ्कारनिर्मुक्ता देवेन्द्रास्ते बभूविरे ।
गाणपत्यप्रिया जाता भजन्ते विघ्ननायकम् ॥ ७२॥

चित्ते चिन्तामणिः स्थित्वा प्रकृत्या खेलति प्रभुः ।
मिथ्याहङ्कारभावेन बन्धनं प्रतिपद्यते ॥ ७३॥

कर्ता कारयिता देवो गणेशो नात्र संशयः ।
हृदिस्थं तं समर्प्यैव स्वात्मानं सुखिनोऽभवन् ॥ ७४॥

मुद्गल उवाच ।
श्रुत्वा दशरथो राजा जगाद मुनिसत्तमम् ।
चन्द्रस्य का गतिर्जाता तां मे वद महामुने ॥ ७५॥

वसिष्ठ उवाच ।
गणेशशापसंयुक्तश्चन्द्रः स स्वगृहे गतः ।
एकान्ते दुःखसंयुक्तो विचारमकरोद्धृदि ॥ ७६॥

सम्प्रज्ञातस्वरूपश्च देहो गणपतेः स्मृतः ।
असम्प्रज्ञातरूपं वै शिरस्तस्य महात्मनः ॥ ७७॥

तयोर्योगे गणेशोऽयं भक्तानुग्रहकारणात् ।

देहधारी स्वयं साक्षाद्बभूवात्र न संशयः ॥ ७८॥

(Page खं. ४ अ. ६ पान १४)
वेदेषु कथितं ते यद्रूपं परमयोगदम् ।
तन्न ज्ञातं मया देव मोहेनैव गजानन ॥ ७९॥

अपराधं दयासिन्धो क्षम त्वं चित्तगं प्रभो ।
एवं क्षमाप्य विघ्नेशं ध्यात्वा लीनो बभूव ह ॥ ८०॥

गङ्गातीरे समागम्य तताप तप उत्तमम् ।
अष्टादशाक्षरेणैव तोषयामास विघ्नपम् ॥ ८१॥

चन्द्रे लीने जगत् सर्वं दुःखयुक्तं बभूव ह ।
सूर्यस्य तेजसा दग्धं रसहीनं चराचरम् ॥ ८२॥

ततो देवगणैः सर्वैर्भयभीतैः समन्ततः ।
शम्भुविष्णुमुखास्तत्र तपस्तेपुः सहेश्वराः ॥ ८३॥

षडक्षरविधानेन ध्यात्वा हृदि गजाननम् ।
भक्तियुक्ता नृपश्रेष्ठ तोषयामासुरादरात् ॥ ८४॥

वर्षाणां शतके तत्र गते चन्द्रं गणाधिपः ।
आययौ वरदानार्थं तपो बद्धो नृपोत्तम ॥ ८५॥

वर्षेणैकेन देवेशान् ययौ विघ्नाधिपो विभुः ।
समकाले च देवेशाश्चन्द्रस्तं तुष्टुवुर्विभुम् ॥ ८६॥

अथर्वशिरसा ढुण्ढिं तोषयामासुरादरात् ।
सन्तुष्टस्तानुवाचेदं गणेशो ब्रह्मनायकः ॥ ८७॥

श्रीगणेश उवाच ।
वरं वृणुत देवेशाः सन्तुष्टोऽहं ददामि तम् ।
यं यमिच्छथ तं तं वै सफलं वः करोम्यहम् ॥ ८८॥

गणेशवचनं श्रुत्वा देवास्तं प्रणिपत्य ते ।
कृत्वा करपुटं सर्वे जगुः परमहर्षिताः ॥ ८९॥

देवा ऊचुः ।
यदि प्रसन्नभावेन वरदोऽसि गजानन ।
तदा चन्द्रं सुनिर्दोषं कुरु नाथ नमोऽस्तु ते ॥ ९०॥

स तानुवाच सर्वात्मा भक्त्या सन्तोषितः प्रभुः ।
भाद्रशुक्लचतुर्थ्यां वै न द्रष्टव्यः सुधाकरः ॥ ९१॥

हास्यं कृतं मदीयं वै तद् दिने तेन देवपाः ।
दोषयुक्तो विधुस्तस्मान्नान्यथा मे वचो भवेत् ॥ ९२॥

ततोऽतिहर्षिता देवास्तथेति प्रतिपाद्य ते ।
ययुश्चन्द्रं तु सन्द्रष्टुं गणेशेंऽतर्हिते नृप ॥ ९३॥

चन्द्रो गणपतिं दृष्ट्वा ननाम दण्डवत् क्षितौ ।
पूजयामास तं देवं तुष्टाव स कृताञ्जलिः ॥ ९४॥

चन्द्र उवाच ।
नमस्ते विघ्नपालाय गणेशाय परात्मने ।
ब्रह्मेशाय स्वभक्तेभ्यो ब्रह्मभूयप्रदाय ते ॥ ९५॥

अनामयाय सर्वादिपूज्याय तु नमो नमः ।
शिवात्मजाय देवाय विष्णुपुत्राय ते नमः ॥ ९६॥

ब्रह्मपुत्राय सूर्यस्य पुत्र ते विघ्नहारिणे ।
शक्तिपुत्राय शेषस्य पुत्राय च नमो नमः ॥ ९७॥

सर्वपुत्राय सर्वेषां मात्रे पित्रे नमो नमः ।
सर्वेशाय परेशाय परात्परतराय ते ॥ ९८॥

सिद्धिबुद्धिपते तुभ्यं सिद्धिबुद्धिप्रचालक ।
हेरम्बाय महेशानां महेशाय नमो नमः ॥ ९९॥

स्रष्टे पात्रे च संहर्त्रे परमात्मस्वरूपिणे ।
सर्वेभ्यो वरदात्रे तेऽनादिसिद्धाय भो नमः ॥ १००॥

क्षमापराधं देवेश त्वन्मायामोहधारिणः ।
शरणं ते प्रसन्नस्य रक्ष मां महतो भयात् ॥ १०१॥

मां दृष्ट्वा हर्षसम्पन्ना अभवन् देवतादयः ।
अधुना मां निरीक्ष्यैव दोषयुक्ता भयातुराः ॥ १०२॥

अतो मां नैव पश्यन्ति पापिनां पापरूपिणम् ।
निर्दोषं कुरु विघ्नेश करुणालय ते नमः ॥ १०३॥

सर्वदा दर्शनं ते वै ममास्तां विघ्नवारण ।

तेनाऽहं कृतकृत्यश्च भवेयं योगिसम्मतः ॥ १०४॥

ततोऽतिभक्तिसंयुक्तं नृत्यन्तं देवसन्निधौ ।
रोमाञ्चाश्रुसमायुक्तं दृष्ट्वा ढुण्ढिर्जगाद तम् ॥ १०५॥

श्रीगणेश उवाच ।
त्वया कृतमिदं स्तोत्रं मम प्रीतिविवर्धनम् ।
अपराधाननन्तांश्च सहे तेऽनेन निश्चितम् ॥ १०६॥

सर्वसिद्धिप्रदं पूर्णं भविष्यति विशेषतः ।
पठतां शृण्वतां चैव नानासुखकारकं भवेत् ॥ १०७॥

यथापूर्वं स्थितश्चन्द्र तादृशो भव नित्यदा ।
यस्मिन् दिने कृतं हास्यं तत्र दोषयुतो भवेः ॥ १०८॥

ललाटे भूषणं मे त्वं भव सेवापरायणः ।
चतुर्थ्यां कृष्णपक्षस्य व्रते ते पूजनं भवेत् ॥ १०९॥

मां पूजयित्वा तारेश अर्घ्यं यस्ते प्रदास्यति ।
तस्य सिद्धिर्भवेत् पूर्णा व्रतजा नान्यथा क्वचित् ॥ ११०॥

द्वितीयायां च सायाह्ने त्वया प्राप्तोऽहमादरात् ।
अतः शुक्लद्वितीयायां नमस्यो मानवैर्भव ॥ १११॥

द्वितीयायां प्रयत्नेन त्वां नमस्यन्ति मानवाः ।
मासगं दुःखमुत्सृज्य क्वचित् तिष्ठति नान्यथा ॥ ११२॥

एवमुक्त्वांऽतर्दधेऽसौ गणेशश्चन्द्रपूजितः ।
तस्मिन् काले च देवेशा देवास्तत्र समाययुः ॥ ११३॥

मानयामास सम्पूज्य चन्द्रस्तांस्तैः समन्वितः ।
गणेशं ब्राह्मणैः सार्धं संस्थाप्यापूजयत् प्रभुम् ॥ ११४॥

गणेशभालसंस्थानं प्राप्तं चन्द्रेण यत्र वै ।
भालचन्द्रं गणेशानं वदन्ति तत्र संस्थितम् ॥ ११५॥

देवैः सम्पूजितस्तत्र ब्राह्मणैर्गणनायकः ।
प्रगृह्य चन्द्रं निर्दोषं ततः स्वर्गं ययुः सुराः ॥ ११६॥

चन्द्रः स्वांशस्वरूपेण स्वर्गे तिष्ठति भूमिप ।
पूर्णरूपेण विघ्नेशं सेवते नित्यमादरात् ॥ ११७॥

गङ्गातीरे निवासं स चकारात्रिसमुद्भवः ।
विधुश्च भालचन्द्रं तं सेवते भक्तितत्परः ॥ ११८॥

अथ कस्मिंश्च समये देवैः सम्प्रार्थितो हरिः ।
यादवेषु समुत्पन्नो वासुदेवो बभूव ह ॥ ११९॥

अज्ञानेन विधोस्तेन दर्शनं प्रकृतं नृप ।
भाद्रशुक्लचतुर्थ्यां तु सदोषः स बभूव ह ॥ १२०॥

अन्तर्ज्ञानं गतं तस्य नरतुल्यो बभूव सः ।
तथापि विघ्नसंयुक्तो हरिस्तच्छृणु भूमिप ॥ १२१॥

सत्राजिन्नाम राजर्षिर्यादवेषु बभूव वै ।
तेन सूर्यतपस्तप्तं दारुणं शतवत्सरम् ॥ १२२॥

सूर्येण स्वगले संस्थो मणिर्दत्तः स्यमन्तकः ।
सत्राजिते स तद्रत्नं गले भक्त्या बबन्ध ह ॥ १२३॥

नित्यं सुवर्णभाराणामष्टौ स्रवति सन्मणिः ।
सूर्यतेजःसमानश्चाऽशोभयद्यदुनन्दनम् ॥ १२४॥

द्वारकायां स्थितं तं स सूर्यभक्तिपरायणम् ।
शुचिभावेन रत्नं सोऽपूजयत्तान्निरन्तरम् ॥ १२५॥

ततो बहुगते काले कृष्णो दोषयुतोऽभवत् ।
तस्य बुद्धिः समुत्पन्ना मणेः सङ्ग्रहणे नृप ॥ १२६॥

सभायां संस्थितः कृष्णः स सत्राजितमाह्वयत् ।
आगतं तमुवाचाऽसौ विनयेन समन्वितः ॥ १२७॥

श्रीकृष्ण उवाच ।
उग्रसेनश्च सर्वेषां यादवानां महामते ।
राजाऽस्माभिः कृतस्तं ते यादवाः पूजयन्ति भोः ॥ १२८॥

अस्माभिर्दिग्जये प्राप्तमुग्रसेनाय यादव ।
दत्तं श्रेष्ठं तथा त्वं तं मणिं देहि स्यमन्तकम् ॥ १२९॥

सुवर्णं मणिसम्भूतं गृहाण त्वं तु नित्यदा ।
(Page खं. ४ अ. ६ पान १६)

शोभार्थं कण्ठगं तात मणिं कुरु नृपस्य तम् ॥ १३० ॥

एवमुक्तः स सत्राजित्तमुवाच समन्युना ।
प्रसेनाय मया दत्तः स मे नैव ददाति तम् ॥ १३१ ॥

एवमुक्त्वा गृहं गत्वा स्वानुजाय ददौ मणिम् ।
प्रसेनाय स्ववृत्तान्तं कथयामास विस्तरात् ॥ १३२ ॥

ततः कदाचित् कृष्णेन सहिता यदुनन्दनाः ।
मृगयार्थं वने राजन् जग्मुर्हर्षसमन्विताः ॥ १३३ ॥

तत्राशुचिस्वभावेन प्रसेनस्तं मणिं परम् ।
बबन्ध स्वगले सोऽपि तैः सह प्रययौ वनम् ॥ १३४ ॥

अशुचित्वस्य दोषेण सिंहकस्तं प्रसेनकम् ।
साश्वं हत्वाऽऽगृह्य मणिं ययौ स्थानं स्वकं महान् ॥ १३५ ॥

ततस्तं जाम्बवान् हत्वा गृह्य सिंहं मणिं ययौ ।
स्थानं पुत्र्या मणिं हस्ते तं ददौ स महाबलः ॥ १३६ ॥

तव भर्ता सुते यो वै भविष्यति मणिं परम् ।
तस्मै दास्यामि भावेन त्वदीयोऽयं मणिः स्मृतः ॥ १३७ ॥

सायाह्ने यादवाः सर्वे आगताः स्वस्वमन्दिरे ।
प्रसेनेन विहीनास्ते सत्राजित् क्रोधमादधे ॥ १३८ ॥

अहो कृष्णेन मे भ्राता संहतो नात्र संशयः ।
मणिलोभवशेनाऽपि पापिना पापचेतसा ॥ १३९ ॥

ततो लोकाः पुरे संस्थाः सत्यमामानयंस्तु ते ।
उग्रसेनादयः सर्वे कृष्णं न्यभर्त्सयन्नृप ॥ १४० ॥

ततः कृष्णश्च दुःखार्तः स ध्यानेनावलोकयन् ।
नरवन्न बुबोधाऽपि स दोषो वसुदेवजः ॥ १४१ ॥

ततोऽतिदुःखितो भूत्वा विचारं देवकीसुतः ।
चकारान्तरजं ज्ञानं क्व गतं मम साम्प्रतम् ॥ १४२ ॥

नरतुल्यः कथं जातः कारणं नात्र वेद्मि वै ।
देहत्यागं करिष्यामि वृथा लाञ्छनकारणात् ॥ १४३ ॥

ततः सभां समागम्याऽऽगृह्य यादवमुख्यकान् ।
वनं ययौ प्रसेनस्य निश्चयार्थं महाद्युतिः ॥ १४४॥

पादमार्गं प्रसेनस्य ते सङ्गृह्य महावने ।
गतास्तत्र मृतं साश्वं प्रसेनं ददृशुर्नराः ॥ १४५॥

सिंहेन संहतं दृष्ट्वा मणिहीनं तु यादवाः ।
पुरतस्ते ययुः सर्वे सिंहमार्गप्रधारिणः ॥ १४६॥

ततो महावने सिंहमृक्षेण प्रहतं पुनः ।
ददृशुर्न मणिं तत्र लेभिरे भयसङ्कुलाः ॥ १४७॥

ऋक्षपादं तथाऽऽगृह्य ययुर्यादवमुख्यकाः ।
महावने बिले घोरे गतमृक्षमलोकयन् ॥ १४८॥

ततस्तांस्तत्र संस्थाप्य कृष्णः परपुरञ्जयः ।
बिले सम्प्रविवेशाऽथ लाञ्छनस्यापनोदनात् ॥ १४९॥

बिले योजनमात्रं स गत्वा तत्र ददर्श ह ।
प्रकाशयुक्तं संस्थानं शोभमानं सुविस्तरम् ॥ १५०॥

दोलायां संस्थितं वीक्ष्य मणिं कृष्णो जहर्ष च ।
तत्र सुप्तं शिशुं दृष्ट्वा शनैरागात् स यादवः ॥ १५१॥

ततोऽकस्माज्जाम्बवतो बहिः पुत्री समाययौ ।
अपूर्वं पुरुषं दृष्ट्वा चुक्रोश भयसङ्कुला ॥ १५२॥

ततो जाम्बवता राजन् श्रुतं पुत्र्याः प्ररोदनम् ।
आययौ च स तं दृष्ट्वा युयुधे विष्णुना स्वयम् ॥ १५३॥

गतास्तयोरेकविंशतिघस्रास्तु प्रयुध्यतोः ।
यादवा जग्मिरे सर्वे बहिःस्था अष्टमे दिने ॥ १५४॥

द्वारकायां स्ववृत्तान्तं कथयन्ति स्म विह्वलाः ।
दिवसाः सप्त तत्रैव किलास्माकं गता बहिः ॥ १५५॥

(Page खं. ४ अ. ६ पान १७)

तथापि विवरात् कृष्णो न बहिश्च समागतः ।
मृतो वा जीवितो वा स ज्ञायते किं न यादवः ॥ १५६॥

वसुदेवादयः श्रुत्वा सस्त्रीका नृप दुःखिताः ।

उग्रसेनादयः सर्वे रुरुदुर्दुःखकर्शिताः ॥ १५७॥

परेऽस्माकं विशेषेण शत्रवः संस्थिता अहो ।
जरासन्धादयश्चान्ये किं भविष्यति यादवाः ॥ १५८॥

हीनाः कृष्णेन सञ्जाता अधुना नात्र संशयः ।
द्विषद्भिः संहताः सर्वे मरिष्यामः सपक्षकाः ॥ १५९॥

ततो रामेण ते सर्वे सान्त्विता बहुलोक्तिभिः ।
निःश्वस्य संस्थिता भूप दुःखयुक्ता भयाऽऽतुराः ॥ १६०॥

सत्राजितं निनिन्दुस्ते व्यर्थलाञ्छनदं तदा ।
सोऽपि दुःखसमायुक्तो बभूव भयसङ्कुलः ॥ १६१॥

अथ तं जाम्बवान् कृष्णमुवाच घननिःस्वनः ।
कस्त्वं वीर महातेजा योधयन्नसि मां वद ॥ १६२॥

ततस्तं प्रत्युवाचेदं कृष्णो वचनमुत्तमम् ।
यदुवंशभवं कृष्णं मां जानीहि महामते ॥ १६३॥

श्रुत्वा खेदसमायुक्तो जाम्बवांस्तं ननाम वै ।
रामेणोक्तं वचो रम्यं स त्वं विष्णुः समागतः ॥ १६४॥

अहं दासस्त्वदीयो वै क्षमस्व करुणानिधे ।
अज्ञानाच्छक्तिगर्वेणापराधं युद्धजं च मे ॥ १६५॥

स्तुतः सम्पूजितस्तेन कृष्णो वृत्तान्तमादरात् ।
अगदत्तं ततः श्रुत्वा कन्यायुक्तं मणिं ददौ ॥ १६६॥

गृहीत्वा सस्त्रियं कृष्णो द्वारकायां समागतः ।
आगतं कृष्णमालोक्य हर्षयुक्ता बभूविरे ॥ १६७॥

यादवैश्च ततः कृष्णः समानाय्य महामणिम् ।
सत्राजिते ददौ तत्र सर्वेषां पश्यतां नृप ॥ १६८॥

सत्राजिन् मनसाऽत्यन्तं निन्दयामास तां तनुम् ।
भयभीतः स कृष्णस्य विरोधेन महायशाः ॥ १६९॥

सत्यभामां ददौ तस्मै मणियुक्तां महात्मने ।
कृष्णाय स उवाचेदं श्वशुरो विनयान्वितः ॥ १७०॥

सूर्यभक्तियुतस्त्वं वै मणिं रक्ष महामते ।
दौहित्रास्ते भविष्यन्ति ग्रहीष्यन्ति मणिं च ते ॥ १७१॥

तथेति यादवेनैव कृतं सत्राजिता नृप ।
एतस्मिन्नन्तरे तत्र वृत्तान्तो यादवैः श्रुतः ॥ १७२॥

लाक्षागृहेषु सन्दग्धाः कुन्त्या युक्ताश्च पाण्डवाः ।
पुरोचनेन तज् ज्ञात्वा रुरुदुर्यादवा बहु ॥ १७३॥

रामेण हस्तिनापुर्यां कृष्णः सद्यो जगाम ह ।
धृतराष्ट्रादिभिः सोऽपि रुरोद शोकसङ्कुलः ॥ १७४॥

शतधन्वा ततोऽक्रूरः कृतवर्मा च यादवः ।
मिलिताः क्रोधसंयुक्ता विचारं चक्रुरादरात् ॥ १७५॥

सत्राजिता वयं सर्वे कन्यार्थं संवृताः पुरा ।
अस्मान् सन्त्यज्य कृष्णाय ददौ कन्यां सुरूपिणीम् ॥ १७६॥

कृष्णः पाण्डवशोकार्तोऽभवत् तत्रैव संस्थितः ।
स रामो निश्चयतः कार्यं कर्तव्यं तत् त्रिभिः किल ॥ १७७॥

हत्वा सत्राजितं सुप्तं मणिर्ग्राह्यो न संशयः ।
एवं निश्चित्य रात्रौ तं शतधन्वा जगाम ह ॥ १७८॥

सत्राजितं स हत्वा वै मणिं जग्राह दारुणः ।
संस्थाप्य तैलद्रोण्यां तं कृष्णं सत्याययो ततः ॥ १७९॥

श्वशुरं स हतं श्रुत्वा रामेण सहसा गतम् ।
कृष्णं ज्ञात्वा रोषितं शतधन्वाऽक्रूरमाययौ ॥ १८०॥

(Page खं. ४ अ. ६ पान १८)
अक्रूरेण समात्यक्तः कृतवर्माणमाययौ ।
तेनापि न धृतः पक्षः पुनः सोऽक्रूरमाययौ ॥ १८१॥

मणिं तत्रैव निक्षिप्य पपाल भयसङ्कुलः ।
शतयोजनगाऽश्विन्यां समारुह्य नृपात्मज ॥ १८२॥

पलायमानं विज्ञाय कृष्णः सङ्कर्षणान्वितः ।
रथमारुह्य वेगेन तमनु प्रययौ तदा ॥ १८३॥

योजनानां शतं गत्वा ममार ह पुरोऽश्विनी ।

शतधन्वा भयैर्युक्तः पलायत पदा ततः ॥ १८४॥

पदातिनं च तं ज्ञात्वा कृष्णोऽधावत् सुसत्वरः ।
पदातिर्बलभद्रे स रथं त्यक्त्वा महाद्युतिः ॥ १८५॥

ततश्चक्रेण कृष्णेन हतस्तत्र पपात ह ।
शतधन्वा तेन तस्मिन् न दृष्टो मणिरुत्तमः ॥ १८६॥

ततः शोकसमायुक्तो बलभद्रमुवाच ह ।
शतधन्वा हतो हीनो मणिना तत्र मानद ॥ १८७॥

उवाच कोपयुक्तस्तं स ततो रोहिणीसुतः ।
मणिस्त्वया सुसङ्गुप्तो मिथ्या वाक् त्वं महाखल ॥ १८८॥

अग्रजाय प्रदातव्यस्तदर्थं मणिरादरात् ।
कृतं त्वया महालोभिन् कर्म साधु जुगुप्सितम् ॥ १८९॥

ततस्तं विनयेनैव सान्त्वयामास केशवः ।
द्विजदेवगवां ते मे शपथो न कृतं मया ॥ १९०॥

तं तिरस्कृत्य वेगेन त्यक्त्वा रामो जगाम ह ।
विदर्भं राजनीतिज्ञं स्वमित्रं नृपतिं तदा ॥ १९१॥

ततोऽतिदुःखसंयुक्तः कृष्णः परमदारुणम् ।
रुरोद बलभद्रं स स्मृत्वा स्मृत्वा विशेषतः ॥ १९२॥

ज्ञानदृष्ट्या स कृष्णेन मणिर्नाप्तो महीपते ।
ततोऽतिदुःखितो भूत्वा रुरोद च पुनः पुनः ॥ १९३॥

अहो ज्ञानं मदीयं यद्गतं कुत्र विशेषतः ।
नरतुल्यः कृतः केन धिङ् मे जीवितकं किल ॥ १९४॥

रथसंस्थः समायातो द्वारकायां महायशाः ।
लोकवृत्तान्तमुग्रं स कथयामास विस्तरात् ॥ १९५॥

ततो यादवमुख्यैः स भर्त्सितोऽतिविशेषतः ।
कृष्णः सत्राजितः कर्म चकारोत्तरकं नृप ॥ १९६॥

देशे देशे नृपाद्याश्च जनाः कृष्णं विशेषतः ।
निनिन्दुः कर्म कृष्णेन किं कृतं दुष्टबुद्धिना ॥ १९७॥

समर्थं बलभद्रं योऽत्यजज्ज्येष्ठं सुदुर्मतिः ।
मणिलोभी महापापी विश्वास्यो नैव केनचित् ॥ १९८॥

द्वारकायां जनाः सर्वे तं कृष्णं न प्रमेनिरे ।
त्यक्तः सर्वैस्तथा कृष्णः शुशोच परमव्यथः ॥ १९९॥

अस्थित्वचासमायुक्तं सदा स्वगृहसंस्थितम् ।
नारदस्तं समालोच्याययौ दृष्ट्वा सुविस्मितः ॥ २००॥

तं प्रणम्य महात्मानं कृष्णः परमदुःखितः ।
उवाच भावभक्त्या वै कृताञ्जलिपुटः शनैः ॥ २०१॥

श्रीकृष्ण उवाच ।
सर्वैः सन्त्याजितो दुःखी गृहे नित्यं वसाम्यहम् ।
तत्र ते दर्शनं स्वामिन्नभवत् भाग्ययोगतः ॥ २०२॥

ततस्तं नारदः प्राह किमर्थं त्यज्यसे वद ।
एवं पृष्टः पुनः प्राह वृत्तान्तं सर्वमञ्जसा ॥ २०३॥

श्रुत्वा वृत्तान्तमुग्रं वै ध्यानेनालोक्य नारदः ।
देहत्यागे समुद्योगं कुर्वन्तं तमुवाच ह ॥ २०४॥

नारद उवाच ।
भाद्रशुक्लचतुर्थ्यां च त्वया चन्द्रो विलोकितः ।
शप्तोऽसौ विघ्नराजेन तेन सन्दुःखितो भवान् ॥ २०५॥

(Page खं. ४ अ. ६ पान १९)
देहत्यागं महाबुद्धे मा कुरुष्व विशेषतः ।
गणेशं भज भावेन सङ्कष्टीव्रतसंयुतम् ॥ २०६॥

मिथ्याऽपवादशून्यस्त्वं भविष्यसि न चान्यथा ।
सज्ज्ञानश्च समर्थेशस्तस्मात् तं शरणं व्रज ॥ २०७॥

एवमुक्त्वा महायोगी नारदः प्रययौ ततः ।
गणेशगानसंयुक्तो वीणावादनलालसः ॥ २०८॥

ततः कृष्णः प्रहर्षेण युक्तो विघ्नेशमादरात् ।
अभजद् ध्यानमार्गज्ञो ध्यानेनोग्रेण भूमिप ॥ २०९॥

एकाक्षरेण मन्त्रेणापूजयन्नित्यमेव तम् ।

व्रतं चकार स ततः सङ्कष्टीसंज्ञमुत्तमम् ॥ २१०॥

रात्रावेकान्तसंस्थं तं ध्याननिष्ठं जनार्दनम् ।
निश्चलं गणराजः स ययौ भक्तं सुखप्रदः ॥ २११॥

बोधयामास तं कृष्णं गणेशो ब्रह्मनायकः ।
तमुत्थाय ननामाऽसौ पूजयामास चादरात् ॥ २१२॥

पुनः प्रणम्य तुष्टाव विघ्नेशं सामगेन सः ।
स्तोत्रेणाष्टकसंज्ञेन नाम्ना तं प्रननर्त ह ॥ २१३॥

सरोमाञ्चं गणेशानः कृष्णं दृष्ट्वा जगाद ह ।
वरं वरय मत्तस्त्वं दास्यामि हृदि वाञ्छितम् ॥ २१४॥

गणेशवचनं श्रुत्वा तं जगाद महायशाः ।
कृष्णो भक्त्या समायुक्तो वचनं खेदसंयुतः ॥ २१५॥

श्रीकृष्ण उवाच ।
यदि तुष्टोऽसि विघ्नेश वरदोऽसि विशेषतः ।
तदा ते भक्तिमुग्रां मे देहि ह्यव्यभिचारिणीम् ॥ २१६॥

भाद्रशुक्लचतुर्थ्यां ये चन्द्रं पश्यति विघ्नप ।
ते शापदुःखहीना वै भवन्तु कृपया च ते ॥ २१७॥

अहं चासन्नमरणजनवज्ज्ञानवर्जितः ।
प्रकृतोऽन्यस्य का वार्ता प्रार्थयामि ततः प्रभो ॥ २१८॥

जगाद गणनाथः स ततस्तं भक्तिमोहितः ।
मम भक्तिर्दृढा कृष्ण भविष्यति च तेऽनघ ॥ २१९॥

स्यमन्तकस्य माहात्म्यं त्वदीयं लाञ्छनप्रदम् ।
वरदानं मदीयं च यः शृणोति जनार्दन ॥ २२०॥

पठेत्तु भावयुक्तश्चेन् मां धृत्वा हृदये हरे ।
स एव दोषसंहीनो भवत्वत्र न संशयः ॥ २२१॥

एवमुक्त्वा गणेशानः कृष्णं भक्तिपरायणम् ।
अन्तर्धानं चकाराऽसौ कृष्णस्तत्र समास्थितः ॥ २२२॥

सम्पूर्णं जागरं कृत्वा पञ्चम्यां नियतः प्रभुः ।
पूजयित्वा गणेशानं ददौ दानं विशेषतः ॥ २२३॥

गणेशकृपया तस्यांऽतर्ज्ञानं सम्बभूव ह ।
ग्रहणं च मणेस्तेन ज्ञातमक्रूरकारितम् ॥ २२४॥

सभायां स समागम्याक्रूरं तत्राजुहाव च ।
तं प्रणम्य महाभागमुवाच हास्यसंयुतः ॥ २२५॥

मणिश्च तात सन्त्यक्तो गेहे ते शतधन्वना ।
बलभद्रार्थमद्य त्वं मणिं दर्शय मानद ॥ २२६॥

ततोऽक्रूरेण चानीतो मणिस्तत्र सुसंसदि ।
दृष्ट्वोग्रसेनमुख्यास्ते प्रशशंसुर्जनार्दनम् ॥ २२७॥

अक्रूरश्च विदर्भं तं गत्वा हलधरं प्रभुम् ।
मणिं दत्त्वा समानीय सभायां संस्थितोऽभवत् ॥ २२८॥

समागतं महावीरमनमत् केशवः पुनः ।
सर्वे हर्षयुता जाता द्वारकावासिनस्ततः ॥ २२९॥

निर्दोषं वासुदेवं ते मानयामासुरादरात् ।
राजानः सुहृदः सर्वे नानादेशनिवासिनः ॥ २३०॥

(Page खं. ४ अ. ७ पान २०)
सर्वेषां हृदि संस्थोऽयं गणेशो बुद्धिनायकः ।
तस्यैव कृपया राजन् भवेत् किं किं सुदुर्लभम् ॥ २३१॥

अतो भाद्रचतुर्थ्यां वै न द्रष्टव्यः कदाचन ।
चन्द्रः कदाचित् दृष्टश्चेदिदं श्रोतव्यमादरात् ॥ २३२॥

तेन दोषविहीनश्च जायते नात्र संशयः ।
अन्यथा भ्रष्टभावेन नारकी स नरो भवेत् ॥ २३३॥

स्यमन्तकमणेश्चित्रं चरितं कथितं परम् ।
चन्द्रदर्शनजं दोषं हरति श्रवणेन च ॥ २३४॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
चतुर्थे खण्डे गजाननचरिते भाद्रशुक्लचतुर्थी
चन्द्रदर्शनदोषहरणचरितवर्णनं नाम षष्ठोऽध्यायः ॥ ४.६

## ४.७ भाद्रपदशुक्लचतुर्थीव्रतवर्णनं नाम सप्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दशरथ उवाच ।
श्रुतं मया महाख्यानं त्वत्तो वेदविदांवर ।
चतुर्थ्योरुभयोः सारं माहात्म्येन समन्वितम् ॥ १॥

तथापि वद मे ब्रह्मन् पृथक् व्रतसमुद्भवम् ।
चरित्रं विस्तरेणैव केन केन कृतं पुरा ॥ २॥

कीदृशी चाऽभवत् सिद्धिः केन प्राप्तो गजाननः ।
श्रुत्वा व्रतस्य माहात्म्यं यामि नो तृप्तिमादरात् ॥ ३॥

मुद्गल उवाच ।
एवं पृष्टो महायोगी वसिष्ठः परमार्थवित् ।
जगाद तं प्रजानाथ शृणु तत् सुखदं परम् ॥ ४॥

वसिष्ठ उवाच ।
आदौ शम्भ्वादिभिश्चैतत् कृतं व्रतमनुत्तमम् ।
कृष्णशुक्लचतुर्थ्यां यदुपोषणपरायणैः ॥ ५॥

ततः स्वायम्भुवाद्यैश्च कृतं सर्वार्थसिद्धिदम् ।
ततो मुनिगणैः सर्वैरन्यैर्वर्णस्थजन्तुभिः ॥ ६॥

अधुनाऽहं पृथक्त्वेन कथयामि व्रतोद्भवम् ।
माहात्म्यं सर्वदं पुण्यं सङ्क्षेपेण शृणुष्व तत् ॥ ७॥

पुरा दौष्यन्तिको नाम भरतः सम्बभूव ह ।
तेजस्वी वीरमुख्येशः शस्त्रास्त्रज्ञः प्रतापवान् ॥ ८॥

जित्वा भूमण्डलं सर्वं सार्वभौमो बभूव ह ।
सप्तद्वीपवतीं पृथ्वीमपालद्धर्मसंयुतः ॥ ९॥

तद्देशे दैवयोगेन ह्यनावृष्टिः सुदारुणा ।
बभूव सर्वलोकास्ते भयभीता बभूविरे ॥ १०॥

चराचरं व्यथायुक्तं दृष्ट्वा राजा महायशाः ।
कण्वं मुनिवरं शान्तं ययौ शरणमादरात् ॥ ११॥

तं प्रणम्य महात्मानं पूजयामास भक्तितः ।
कृत्वा करपुटं तस्याऽग्रे स्थितो भरतोऽभवत् ॥ १२॥

तमुवाच महायोगी गाणपत्यप्रियः सदा ।
कण्वो वेदार्थसन्निष्ठो भरतं राजसत्तमम् ॥ १३॥

कण्व उवाच ।
किमर्थमागतो राजन् कुशलं ते महामते ।
अस्ति देशादिभावेषु तिष्ठ त्वं चासनोत्तमे ॥ १४॥

कण्वस्य वचनं श्रुत्वा हर्षयुक्तो महीपतिः ।
मुनिदत्ते विवेशासावासने स कृताञ्जलिः ॥ १५॥

उवाच तं महात्मानं कण्वं वेदविदां वरम् ।
भरतो राजनीतिज्ञो भक्तियुक्तो विशेषतः ॥ १६॥

भरत उवाच ।
त्वत्प्रसादेन योगीन्द्र कुशलं मे प्रवर्तते ।
दैवयोगेन तदपि दुःखितोऽहं समागतः ॥ १७॥

(Page खं. ४ अ. ७ पान २१)
नित्यं स्वधर्मयुक्तेन मया सम्पालिता मही ।
देवव्रतातिथिप्राज्ञप्रीत्यर्थं योगिसत्तम ॥ १८॥

वर्णाश्रमाचारयुता जनाः सर्वे भवन्ति च ।
तथापि पापजं दुःखं सम्प्राप्तं तन्न वेद्म्यहम् ॥ १९॥

अनावृष्टिश्च सम्भूता प्रभो सर्वत्र दुःखदा ।
चराचरं भयोद्विग्नं बभूव रसहीनतः ॥ २०॥

तदर्थं त्वां महायोगिन्नागतोऽहं विशेषतः ।
त्वद्दर्शनजपुण्येन सफलो मे भवोऽभवत् ॥ २१॥

अधुना ब्रूहि पापस्य स्वरूपं तन्निहन्म्यहम् ।
येन वृष्टिर्भवेत् पूर्णा तथा कुरुष्व मानद ॥ २२॥

ततस्तं नृपशार्दूलमुवाच मुनिसत्तमः ।
कण्वः श्रुत्वा च वृत्तान्तं दयायुक्तः स्वभावतः ॥ २३॥

कण्व उवाच ।

शृणु राजन् महत् पापं तव राज्ये प्रवर्तितम् ।
तेनाऽवृष्टिभवं दुःखं प्रादुर्भूतं न संशयः ॥ २४॥

चतुःपदविहीनं ते राज्यं भवति निश्चितम् ।
जनैः सर्वैः सुशीलैश्च पापं घोरं कृतं महत् ॥ २५॥

त्वं पापशीलभावेन वर्तसे जनवत्सल ।
धर्मार्थकाममोक्षैश्च हीनोऽसि पुरुषाधम ॥ २६॥

चतुर्थीसम्भवं तात व्रतं सर्वार्थसिद्धिदम् ।
कार्ष्णं शौक्लं सुविख्यातं भ्रष्टं राज्येऽभवन्नृप ॥ २७॥

चतुर्विधं जगत्सर्वं स्थूलसूक्ष्मादिभेदतः ।
सङ्कष्टं यत्तदेव त्वं जानीहि नृपनायक ॥ २८॥

चतुर्विधं च सङ्कष्टं हरति व्रतकारिणः ।
सा सङ्कष्टचतुर्थी वै कृष्णा ते कथिता मया ॥ २९॥

चतुर्विधं या ददाति सा शुक्ला वरदा मता ।
सञ्चितं नास्ति चेद्राजन् व्रतकारिजनाय वै ॥ ३०॥

चतुर्थीजं स माहात्म्यं कथयामास विस्तरात् ।
कण्वस्तद्भरतायैव स्वशिष्याय विशेषतः ॥ ३१॥

व्रतानि वै निष्फलानि चतुर्थीहीनकानि चेत् ।
ज्ञात्वा प्रणम्य तं राजोवाच हर्षसमन्वितः ॥ ३२॥

भरत उवाच ।
स्वामिन् वद गणेशस्य माहात्म्यं सर्वसिद्धिदम् ।
एतादृशं व्रतं यस्य तं भजिष्यामि नित्यदा ॥ ३३॥

कण्व उवाच ।
शृणु राजन् गणेशस्य माहात्म्यं सर्वदं परम् ।
क्रतुना कथितं मे यद्ब्रह्मपुत्रेण धीमता ॥ ३४॥

एकदाऽहं तपोयुक्तस्तिष्ठामि स्वाश्रमे पुरा ।
वायुमात्राशनो भूत्वा तपामि स्म तपो महत् ॥ ३५॥

मदीयतपसा सर्वं व्याप्तमासीन्नराधिप ।
तथापि योगमास्थाय संस्थितोऽहं विशेषतः ॥ ३६॥

न विश्वगं तैजसगं न प्राज्ञं समष्टिव्यष्टिस्थमनन्तगं न ।
गुणैर्विहीनं परमार्थभूतं गजाननं भक्तियुता भजामः ॥ ८॥

गुणेशगं नैव च बिन्दुसंस्थं न देहिनं बोधमयं न ढुण्ढिम् ।
संयोगहीनाः प्रवदन्ति तत्स्थं गजाननं भक्तियुता भजामः ॥ ९॥

अनागतं नैव गतं गणेशं कथं तदाकारमयं वदामः ।
तथापि सर्वं प्रभुदेहसंस्थं गजाननं भक्तियुता भजामः ॥ १०॥

यदि त्वया नाथ कृतं न किञ्चित्तदा कथं सर्वमिदं विभाति ।
अतो महात्मानमचिन्त्यमेव गजाननं भक्तियुता भजामः ॥ ११॥

सुसिद्धिदं भक्तजनस्य देवं स कामिकानामिह सौख्यदं तम् ।
अकामिकानां भवबन्धहारं गजाननं भक्तियुता भजामः ॥ १२॥

सुरेन्द्रसेव्यं ह्यसुरैः सुसेव्यं समानभावेन विराजयन्तम् ।
अनन्तवाहं मुषकध्वजं तं गजाननं भक्तियुता भजामः ॥ १३॥

सदा सुखानन्दमये जले च समुद्रजे चेक्षुरसे निवासम् ।
द्वन्द्वस्य पानेन च नाशरूपे गजाननं भक्तियुता भजामः ॥ १४॥

चतुःपदार्था विविधप्रकाशास्त एव हस्ताः स चतुर्भुजं तम् ।
अनाथनाथं च महोदरं वै गजाननं भक्तियुता भजामः ॥ १५॥

महाखुमारूढमकालकालं विदेहयोगेन च लभ्यमानम् ।
अमायिनं मायिकमोहदं तं गजाननं भक्तियुता भजामः ॥ १६॥

रविस्वरूपं रविभासहीनं हरिस्वरूपं हरिबोधहीनम् ।
शिवस्वरूपं शिवभासनाशं गजाननं भक्तियुता भजामः ॥ १७॥

महेश्वरीस्थं च सुशक्तिहीनं प्रभुं परेशं परवन्द्यमेवम् ।
अचालकं चालकबीजभूतं गजाननं भक्तियुता भजामः ॥ १८॥

शिवादिदेवैश्च खगैः सुवन्द्यं नरैर्लतावृक्षपशुप्रभूभिः ।
चराचरैर्लोकविहीनमेवं गजाननं भक्तियुता भजामः ॥ १९॥

मनोवचोहीनतया सुसंस्थं निवृत्तिमात्रं ह्यजमव्ययं तम् ।
तथापि देवं पुर आस्थितं तं गजाननं भक्तियुता भजामः ॥ २०॥

वयं सुधन्या गणपस्तवेन तथैव नत्यार्चनतस्तवैव ।
(Page खं. ४ अ. ४३ पान ११०)

गणेशरूपाश्च कृतास्त्वया तं गजाननं भक्तियुता भजामः ॥ २१॥

गजाख्यबीजं प्रवदन्ति वेदास्तदेव चिह्नेन च योगिनस्त्वाम् ।
गच्छन्ति तेनैव गजाननस्त्वं गजाननं भक्तियुता भजामः ॥ २२॥

पुराणवेदाः शिवविष्णुकाद्याऽमराः शुकाद्या गणपस्तवे वै ।
विकुण्ठिताः किं च वयं स्तवाम गजाननं भक्तियुता भजामः ॥ २३॥

मुद्गल उवाच ।
एवं स्तुत्वा गणेशानं नेमुः सर्वे पुनः पुनः ।
तानुत्थाप्य वचो रम्यं गजानन उवाच ह ॥ २४॥

गजानन उवाच ।
वरं ब्रूत महाभागा देवाः सर्षिगणाः परम् ।
स्तोत्रेण प्रीतिसंयुक्तः परं दास्यामि वाञ्छितम् ॥ २५॥

गजाननवचः श्रुत्वा हर्षयुक्ताः सुरर्षयः ।
जगुस्तं भक्तिभावेन साश्रुनेत्राः प्रजापते ॥ २६॥

देवर्षय ऊचुः ।
गजानन यदि स्वामिन् प्रसन्नो वरदोऽसि भोः ।
तदा भक्तिं दृढां देहि लोभहीनां त्वदीयकाम् ॥ २७॥

लोभासुरस्य देवेश कृता शान्तिः सुखप्रदा ।
तदा जगदिदं सर्वं वरयुक्तं कृतं त्वया ॥ २८॥

अधुना देवदेवेश कर्मयुक्ता द्विजादयः ।
भविष्यन्ति धरायां वै वयं स्वस्थानगास्तथा ॥ २९॥

स्वस्वधर्मरताः सर्वे गजानन कृतास्त्वया ।
अतःपरं वरं याचामहे ढुण्ढे कमप्यहो ॥ ३०॥

यदा ते स्मरणं नाथ करिष्यामो वयं प्रभो ।
तदा सङ्कटहीनान् वै कुरु त्वं नो गजानन ॥ ३१॥

एवमुक्त्वा प्रणेमुस्तं गजाननमनामयम् ।
स तानुवाच प्रीतात्मा भक्त्यधीनस्वभावतः ॥ ३२॥

गजानन उवाच ।
यद्यच्च प्रार्थितं देवा मुनयः सर्वमञ्जसा ।

भविष्यति न सन्देहो मत्स्मृत्या सर्वदा हि वः ॥ ३३॥

भवत्कृतमदीयं वै स्तोत्रं सर्वत्र सिद्धिदम् ।
भविष्यति विशेषेण मम भक्तिप्रदायकम् ॥ ३४॥

पुत्रपौत्रप्रदं पूर्णं धनधान्यविवर्धनम् ।
सर्वसम्पत्करं देवाः पठनाच्छ्रवणान्नृणाम् ॥ ३५॥

मारणोच्चाटनादीनि नश्यन्ति स्तोत्रपाठतः ।
परकृत्यं च विप्रेन्द्रा अशुभं नैव बाधते ॥ ३६॥

सङ्ग्रामे जयदं चैव यात्राकाले फलप्रदम् ।
शत्रूच्चाटनकार्येषु प्रशस्तं तद्भविष्यति ॥ ३७॥

कारागृहगतस्यैव बन्धनाशकरं भवेत् ।
असाध्यं साधयेत् सर्वमनेनैव सुरर्षयः ॥ ३८॥

एकविंशतिवारं चैकविंशति दिनावधिम् ।
प्रयोगं यः करोत्येव स भवेत् सर्वसिद्धिभाक् ॥ ३९॥

धर्मार्थकाममोक्षाणां ब्रह्मभूयस्य दायकम् ।
भविष्यति न सन्देहः स्तोत्रं मद्भक्तिवर्धनम् ॥ ४०॥

एवमुक्त्वा गणाधीशस्तत्रैवान्तरधीयत ।
देवाः सर्षिगणाः सर्वेऽभवन् खिन्ना इव प्रभो ॥ ४१॥

गजाननस्य मूर्तिस्तैः स्थापिता सिद्धिदा ततः ।
नैर्ऋते कोणभागे स्म दर्शनेन सुखप्रदा ॥ ४२॥

तत्रैव संस्थिता देवा मुनयो भक्तिसंयुताः ।
अंशेन स्वाधिकारेषु स्वाश्रमेषु गता बभुः ॥ ४३॥

ततः स्वधर्मसंयुक्ता बभूवुर्मानवा भुवि ।
यथायोग्यं जगत् सर्वं बभूवे हर्षितं विधे ॥ ४४॥

(Page खं. ४ अ. ४४ पान १११)

एतद्गजाननस्यैव चरितं पापनाशनम् ।
भुक्तिमुक्तिप्रदं दक्ष कथितं ब्रह्मदं परम् ॥ ४५॥

यः पठेत् पाठयेद्वापि शृणुते श्रद्धयान्वितः ।
स ईप्सितफलं भुक्त्वा ब्रह्मभूतो भविष्यति ॥ ४६॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते देवमुनिकृतस्तुतिवर्णनं नाम त्रिचत्वारिंशोऽध्यायः ॥ ४.४३

## ४.४४ सिन्दूरशिवसमागमो नाम चतुश्चत्वारिंशोऽध्यायः

श्रीगणेशाय नमः ॥

दक्ष उवाच ।
धन्योऽहं मुद्गल स्वामिंस्त्वत्सङ्गान्नात्र संशयः ।
लोभशान्तिकरं चित्रं श्रुतं भक्त्या चरित्रकम् ॥ १॥

न तृप्तोऽहं गजास्यस्य सुधापान इव प्रभो ।
वद क्षेत्रस्य माहात्म्यमधुना तस्य सर्वदम् ॥ २॥

गजाननस्य भक्त्यर्थमवतारान् धृतान् वद ।
सङ्क्षेपेण महाभाग सर्वज्ञोऽसि च ते नमः ॥ ३॥

सूत उवाच ।
दक्षस्य वचनं श्रुत्वा मुद्गलो हर्षसंयुतः ।
जगाद तं महाभागं महाभागो दयान्वितः ॥ ४॥

मुद्गल उवाच ।
अवतारा अनन्ताश्च गजाननस्य मानद ।
भक्तानां कार्यसिद्ध्यर्थं कथनं नैव शक्यते ॥ ५॥

तथापि शृणु दक्ष त्वमवतारचरित्रकम् ।
गजाननस्य कथयामि समासेन सर्वदम् ॥ ६॥

पार्वत्या शङ्करेणैवाऽऽराधितो गणनायकः ।
दिव्यवर्षसहस्रेण प्रसन्नो वरदोऽभवत् ॥ ७॥

ताभ्यां सम्पूजितो देवः स्तुतः संयाचितोऽभवत् ।
त्वं पुत्रो भव नौ स्वामिन् संसारोत्तारणाय वै ॥ ८॥

तथेति प्रतिपाद्याऽसौ गणेशोऽन्तर्दधे स्वयम् ।
पुत्रः सिन्धुवधायाभून् मयूरेश इति स्मृतः ॥ ९॥

हत्वा सिन्धुं महावीर्यं गतः स्वानन्दके पुरे ।
एवं नानाऽवतारान् स दधार शिवयोर्गृहे ॥ १०॥

अष्टकोट्यवताराश्च गणेशस्य प्रकीर्तिताः ।
शिवपुत्राश्च ते ख्याताः कार्यार्थं त्वंशभावतः ॥ ११॥

केचिच्छिवात् सुमुद्भूताः केचिच्छक्तेर्महात्मनः ।
उभयोर्योगतः केचित् कलांशा अभवन् पराः ॥ १२॥

यादृशं सङ्कटं प्राप्तं तदर्थं संस्मृतो विभुः ।
तावत् कलांशयोगेन पुत्रोऽभूत् सुखदायकः ॥ १३॥

कृत्वा कार्यस्य संसिद्धिं पुनः स्वानन्दगोऽभवत् ।
तद्वियोगेन सन्तप्तौ शिवौ किल बभूवतुः ॥ १४॥

अन्ये नानाऽवताराश्च कश्यपादिगृहेंऽशतः ।
धृता गजाननेनैव वक्तुं नैव प्रशक्यते ॥ १५॥

इतिहासं प्रवक्ष्यामि सर्वसिद्धिप्रदायकम् ।
गजाननावतारेण युक्तं शृणु प्रजापते ॥ १६॥

एकदा निद्रितं शम्भुर्ब्रह्माणं प्रययौ प्रभुः ।
किञ्चित् कार्यार्थमेवं तमुत्थाप्य स्वगृहेऽगमत् ॥ १७॥

स उत्थितो महाजृम्भां चकार क्रोधसंयुतः ।
तस्माज्जातः पुमानेको रक्तवर्णः सुशोभनः ॥ १८॥

सुवासबहुलेनैव युक्तः काम इवापरः ।
तं दृष्ट्वा विस्मितो ब्रह्मा जगाद स महाबलम् ॥ १९॥

ब्रह्मोवाच ।
कोऽसि त्वं पुरुषश्रेष्ठ किमर्थं ह्यागतो वद ।
एवं पृष्टः स तं देवं जगाद मेघनिःस्वनः ॥ २०॥

पुमानुवाच ।
जृम्भायास्ते समुत्पन्नः पुत्रोऽहं देवनायक ।
स्थानं नामादिकं देहि भक्षणं विविधं पितः ॥ २१॥

ततोऽतिहर्षितो ब्रह्मा पुत्रं दृष्ट्वा महाद्भुतम् ।
ददौ तस्मै विशेषेण वरांस्ताञ् शृणु मानद ॥ २२॥

सुवासबहुलं रक्तं वपुस्ते तेन सिन्दुर ।
नाम नानाविधान् भोगान् भुङ्क्ष्व सर्वत्रगः स्वयम् ॥ २३॥

न बलेन समस्ते वै भविष्यति चराचरे ।
ब्रह्माण्डजयसंयुक्तो भव पुत्र ममाज्ञया ॥ २४॥

यद्यदिच्छसि तत्तत्ते सफलं प्रभविष्यति ।
क्रोधादालिङ्गसे यं त्वं भस्मसात्तं करिष्यसि ॥ २५॥

एवं नानावरान् दत्त्वा संस्थितं प्रपितामहम् ।
तं प्रणम्य स सिन्दूरो जगामास्तुत्य भूतले ॥ २६॥

शौनक उवाच ।
तपोहीनाय दाताऽसौ ददौ सन्दुर्लभान् वरान् ।
किं कारणं वद प्राज्ञ संशयो मे महान् हृदि ॥ २७॥

सूत उवाच ।
इच्छासङ्कल्पसिद्ध्यर्थं तपस्तपति यो नरः ।
विपुले सोऽपि तपसि मृतो यदि भवेन् मुने ॥ २८॥

अन्यस्मिन् जन्मनि प्राज्ञः फलयुक्तः प्रजायते ।
स्वल्पश्रमेण देवोऽपि वरं ददाति निश्चितम् ॥ २९॥

एतत्ते कथितं सर्वं संशयच्छेदनं वचः ।
अधुना शृणु संवादं प्रकृतं यं पुरा भवम् ॥ ३०॥

विचारं मार्गमध्ये स गत्वा सिन्दूर आकरोत् ।
तपोहीनायाऽपि देवो मे ददाति वरं कथम् ॥ ३१॥

अतोऽहं वञ्चितो नूनं विधिना नात्र संशयः ।
लिङ्गयित्वा मृतं कुर्वे तं सत्यत्वदिदृक्षया ॥ ३२॥

निःसंशयं भवेदेवं विचार्य सिन्दुरासुरः ।
आययौ ब्रह्मणः सोऽपि समीपे क्रोधसंयुतः ॥ ३३॥

गर्जयित्वा विधातारमालिङ्गितुं प्रचक्रमे ।
तद् दृष्ट्वा परमाश्चर्यं ब्रह्मोवाच सुदारुणम् ॥ ३४॥

ब्रह्मोवाच ।
मद्वरस्य प्रभावेन मां हन्तुं समुपागतः ।

अतो दैत्योऽसि दुष्ट त्वमभाग्यान्नात्र संशयः ॥ ३५॥

पुत्रस्नेहेन रे दुष्ट वरा दत्ताः सुदुर्लभाः ।
अतो गजाननस्त्वां वै हनिष्यति कुलाधम ॥ ३६॥

एवमुक्त्वा पपालाऽसौ विकुण्ठे शरणं ययौ ।
नारायणं च सिन्दूरस्तमनु प्रययौ खलः ॥ ३७॥

नारायणाय वृत्तान्तं कथयामास विस्तरात् ।
सोऽपि श्रुत्वा विनिःश्वस्याऽभवत् सम्पूज्य संस्थितः ॥ ३८॥

एतस्मिन्नन्तरे तत्र सिन्दूरश्च समागमत् ।
जगाद विष्णुमव्यक्तं वचः क्रोधसमन्वितः ॥ ३९॥

सिन्दूर उवाच ।
विष्णो रक्ष विधातारं मां शत्वा प्रसमागतम् ।
हनिष्यामि त्वया सार्धं पश्य मे पौरुषं परम् ॥ ४०॥

विष्णुरुवाच ।
अहं सत्त्वगुणश्चायं वेदाध्ययनतत्परः ।
आवां हत्वा महादैत्य न यशस्ते भविष्यति ॥ ४१॥

त्वदधीनौ च सिन्दूर आवां जानीहि मानद ।
शङ्करः सर्वसंहर्ता स यशस्ते हरिष्यति ॥ ४२॥

विष्णोर्वचनमाकर्ण्य त्यक्त्वा विष्णुं चतुर्मुखम् ।
जगाम शङ्करं सद्यः कैलासे युद्धलालसः ॥ ४३॥

ध्यानस्थं शङ्करं दृष्ट्वा विचारमकरोद्धृदि ।
अमुं नग्नं तपोयुक्तं किमर्थं हन्मि मूर्खवत् ॥ ४४॥

(Page खं. ४ अ. ४५ पान ११३)
वामाङ्गे संस्थितां नारीं रूपेणाप्रतिमां पराम् ।
तां गृहीत्वा गमिष्यामि स्वेच्छया क्रीडानोत्सुकः ॥ ४५॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
चतुर्थे खण्डे गजाननचरिते सिन्दूरशिवसमागमो नाम चतुश्चत्वारिंशोऽध्यायः ॥
४.४४

## ४.४५ शिवविचारवर्णनप्रसङ्गो नाम पञ्चचत्वारिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
एवं निश्चितसङ्कल्पः सिन्दूरो गिरिजां ततः ।
गृह्योड्डीय ययौ सद्यो मूर्च्छितां भयविह्वलाम् ॥ १॥

तस्य श्वसनवेगेन पतिता नन्दिमुख्यकाः ।
गणाः पुनः समुत्थाय हाहाकारं प्रचक्रिरे ॥ २॥

हस्तगा पार्वती तत्र सावधाना बभूव ह ।
सस्मार गणपं देवं दैत्यपाशनियन्त्रिता ॥ ३॥

गौर्युवाच ।
गजानन ज्ञानविहारकारिन् न मां च जानासि परावमर्शाम् ।
गणेश रक्षस्व न चेच्छरीरं त्यजामि सद्यस्त्वयि भक्तियुक्ता ॥ ४॥

विघ्नस्य शत्रोऽसुरसङ्घहन्तर्विघ्नेश हेरम्ब महोदरप्रिय ।
मां रक्ष दैत्यात्त्वयि भक्तियुक्तां लम्बोदर प्रेमविवर्धनाच्युत ॥ ५॥

किं सिद्धिबुद्धिप्रसरेण मोहयुक्तोऽसि किं वा निशि निद्रितोऽसि ।
किं लक्षलाभार्थविचारयुक्तः किं मां च विस्मृत्य सुसंस्थितोऽसि ॥ ६॥

किं भक्तसङ्गेन च देवदेव नानोपचारैश्च सुयन्त्रितोऽसि ।
किं मोदकाद्यैर्गणपाऽऽवृतोऽसि नानाविहारेषु च वक्रतुण्ड ॥ ७॥

स्वानन्दभोगेषु परिप्लुतोऽसि दासीं च विस्मृत्य महानुभाव ।
अनन्तलीलासु सलालसोऽसि किं भक्तरक्षार्थसुसङ्कटस्थ ॥ ८॥

अहो गणेशामृतपानदक्षामरैस्तथा वाऽसुरपैः स्मृतोऽसि ।
तदर्थनानाविधिसंयुतोऽसि विसृज्य दासीं त्वमनन्यभावाम् ॥ ९॥

रक्षस्व मां दीनतमां परेश सर्वत्र चित्तेषु च संस्थितस्त्वम् ।
प्रभो विलम्बेन विनायकोऽसि ब्रह्मेश किं देव नमो नमस्ते ॥ १०॥

भक्ताभिमानीति च नाम मुख्यं वेदे बभूवात्र न किं महात्मन् ।
आगत्य हत्वा दितिजं सुरेश मां रक्ष दासीं हृदि पादनिष्ठाम् ॥ ११॥

अहो न दूरं बत किञ्चिदेव कथं न बुद्धीश समागतोऽसि ।

सञ्चिन्त्य देहं प्रजहामि ते हि यशः करिष्ये विपरीतमेव ॥ १२॥

रक्ष रक्ष दयासिन्धोऽपराधान् मे क्षमस्व च ।
क्षणे क्षणे वयं दास्यो रक्षितव्या विशेषतः ॥ १३॥

स्तुवन्त्यामेव पार्वत्यां शङ्करो बोधसंयुतः ।
बभूव गणपानां वै श्रुत्वा हाहारवं विधे ॥ १४॥

गणेशं मनसा स्मृत्वा वृषारूढः समाययौ ।
क्षणेन दैत्यराजं तं दृष्ट्वा डमरुणा त्वहन् ॥ १५॥

ततः सोऽपि शिवं वीक्ष्याऽऽलिङ्गितुं धावितोऽभवत् ।
शिवस्य शूलकादीनि शस्त्राण्याकुण्ठितानि वै ॥ १६॥

(Page खं. ४ अ. ४५ पान ११४)
तद् दृष्ट्वा परमाश्चर्यं भयभीतो महेश्वरः ।
सस्मार गणपं सोऽपि निर्विघ्नार्थं प्रजापते ॥ १७॥

पार्वत्याः स्तवनं श्रुत्वा स गजानन आययौ ।
ब्राह्मणस्य स्वरूपेण तयोर्मध्ये प्रयुध्यतोः ॥ १८॥

गणेशेन कृतं तत्र कौतुकं परमाद्भुतम् ।
पपात गुप्तरूपश्च परशुर्दैत्यवक्षसि ॥ १९॥

तेनाहतं महादैत्यं व्याकुलं वीक्ष्य विघ्नपः ।
ततस्तं ब्राह्मणः प्राह शृणु दैत्य वचो हितम् ॥ २०॥

जगज्जनिमिमां शक्तिं मुञ्च नो चेच्छिवः स्वयम् ।
गुप्तरूपेण सद्यस्त्वां मारयिष्यति निश्चितम् ॥ २१॥

अहं शम्भुं करिष्यामि त्वदाज्ञावशवर्तिनम् ।
भार्यां तस्य परित्यज्य कुरु राज्यं त्रिलोकगः ॥ २२॥

तथेति सिन्दुरेणैव कृतं सोऽपि शिवं वचः ।
जगाद हास्यवदनो दैत्याधीनो भव प्रभो ॥ २३॥

ब्रह्मलब्धवरं दैत्यं न जेतुं तं क्षमो भवान् ।
महेशशक्तिं सङ्गृह्य कालस्य क्रमणं कुरु ॥ २४॥

तथेति शङ्करेणोक्तं ददौ शक्तिं शिवाय सः ।
दैत्यः कैलासगो भूत्वा ननन्द विजयी ततः ॥ २५॥

ततः कैलासमेवं स त्यक्त्वा भूलोकगोऽभवत् ।
दैत्यस्त्रिभुवनं जित्वा जगदीशो बभूव ह ॥ २६॥

अन्तर्धानं चकाराऽसौ गणेशो द्विजरूपधृक् ।
तत् दृष्ट्वा पार्वती तत्र शोकयुक्ता बभूव ह ॥ २७॥

अहो ब्राह्मणरूपेणाऽऽगतोऽयं गणनायकः ।
मोचयित्वा स मां शम्भो त्वां संरक्ष्य ययौ पुनः ॥ २८॥

ततस्तौ पार्वतीशम्भू परलीवनगौ प्रभू ।
बभूवतुश्च विघ्नेशं तपसा हृदि चिन्तकौ ॥ २९॥

ततापं तप उग्रं स सस्त्रीकः शङ्करस्ततः ।
गते वर्षशते पूर्णे तं गजानन आययौ ॥ ३०॥

गणेश उवाच ।
वरं वृणु महादेव यत्ते चित्ते प्रवर्तते ।
दास्यामि तपसा तुष्टो वाञ्छितं प्राह शङ्करम् ॥ ३१॥

ततस्तं शङ्करो नत्वा स्तुत्वा नानाविधैः स्तवैः ।
पार्वत्या पूज्य विघ्नेशं प्रणम्य प्रत्युवाच ह ॥ ३२॥

शिव उवाच ।
वरदोऽसि गणाधीश तदा मे त्वं सुतो भव ।
यावज्जीवनपर्यन्तं तिष्ठ नाथ नमोऽस्तु ते ॥ ३३॥

त्वया नानाऽवताराश्च धृता मदीयवेश्मनि ।
ते सर्वे स्वल्पकांशस्था बभूवुर्गणनायक ॥ ३४॥

तादृशं मा कुरु स्वामिन् वस नित्यं च मे गृहे ।
तत्राऽहं त्वां भजिष्यामि पुत्रभावेन विघ्नप ॥ ३५॥

संसारे पुत्रभावेन मूर्तौ त्वां कुलदैवतम् ।
हृदये योगयुक्तोऽहं भजिष्यामि गजानन ॥ ३६॥

तथेति गणनाथस्तं जगादान्तर्दधे पुनः ।
कैलासमागतः शम्भुः शोकयुक्तो विशेषतः ॥ ३७॥

ततः किञ्चिद्गते काले पार्वती स्नानमाचरत् ।

नग्ना तत्र महेशानः सहसा समुपागतः ॥ ३८॥

लज्जिता तं निरीक्ष्यैव जगदम्बा स्वकेशतः ।
देहं सञ्छादयामास शङ्करो गृहगोऽभवत् ॥ ३९॥

ततः कदाचित्सा देवी सखीभ्यां संस्थिताऽभवत् ।
उवाच तां सखी तत्र जया च विजया परा ॥ ४०॥

जयाविजये ऊचतुः ।
गणा नन्दिमुखाः सर्वेऽस्मदीया नात्र संशयः ।
शिवं यदि निरुध्यैव तिष्ठामश्चेच्छिवात्मकाः ॥ ४१॥

(Page खं. ४ अ. ४६ पान ११५)
अतः कं च महादेवि स्वकीयं वशगं गणम् ।
कुरु त्वं सा ततः शक्तिस्तथेति प्रत्युवाच ते ॥ ४२॥

स्वाङ्गान् मलं समाकृष्य कृत्वा तं पुरुषाकृतिम् ।
पुनः सञ्जीवयामास पार्वती तं जगाद ह ॥ ४३॥

द्वारे तिष्ठ महाबाहो मदाज्ञावशगः सदा ।
मदाज्ञया विना पुत्र मा प्रवेश्यस्त्वया नरः ॥ ४४॥

अहं स्नानार्थमत्रैव संस्थिता कालपर्यये ।
पतिर्मे तत्र रे वत्स त्वागतोऽपि भवेत् स्वयम् ॥ ४५॥

केनापि कथितं तत्राऽतो मा कुरु च तादृशम् ।
स्वामिनं शङ्करं पुत्र निषेधस्व मदाज्ञया ॥ ४६॥

तथेति तां प्रणम्याऽऽदौ द्वारसंस्थो बभूव सः ।
पुरुषः सा सखीभ्यां च मुदिता संस्थिताऽभवत् ॥ ४७॥

एतस्मिन्नन्तरे तत्र गणयुक्तः शिवो ययौ ।
तं न्यषेधत् स्ववेगेन बोधितोऽपि प्रजापते ॥ ४८॥

ततोऽतिकोपसंयुक्तः शङ्करः प्रबभूव ह ।
तज्ज्ञात्वा सा सखीभ्यां च मुदिता संस्थिताऽभवत् ॥ ४९॥

ततोऽतिक्रोधसंयुक्तो गणान्नन्दिमुखान् शिवः ।
आज्ञापयच्च युद्धाय हन्तव्योऽयं न संशयः ॥ ५०॥

ततस्ते शस्त्रसङ्घातैर्जघ्नुस्तं क्रोधसंयुताः ।

पार्वत्या तेज उग्रं यन्निक्षिप्तं पुरुषे तदा ॥ ५१॥

तेजसा शस्त्रसङ्घाता मोघा जाता विशेषतः ।
मुसलेन जघानाऽसौ गणान् सर्वान् महाबलः ॥ ५२॥

ततः पलायनं चक्रुर्गणाः सर्वे भयान्विताः ।
ततः स्कन्दं शिवः क्रुद्धः प्रेषयामास दारुणम् ॥ ५३॥

कुण्ठितास्त्रो भयोद्विग्नः सेनानीस्ताडितो भृशम् ।
पपाल च ततः शम्भुः सस्माराऽमरमुख्यकान् ॥ ५४॥

ब्रह्मा विष्णुश्च देवेन्द्रो यमाद्याः सर्व आगताः ।
प्रणिपत्य महेशानं संस्थिताश्चाऽभवन् पुरः ॥ ५५॥

तान् शिवः कथयामास वृत्तान्तं ते ततो ययुः ।
इन्द्रादयः सगन्धर्वा युयुधुः पुरुषेण च ॥ ५६॥

पलायनं तेऽपि चक्रुः कुण्ठितास्त्रा भयातुराः ।
ताडिता मुसलेनैव शङ्करः क्षोभितोऽभवत् ॥ ५७॥

ततस्तत्र विचारं ते चक्रुः सर्वे सुरेन्द्रकाः ।
विष्णुमुख्याः शिवेनैव मुनिभिश्च प्रजापते ॥ ५८॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते शिवविचारवर्णनप्रसङ्गो नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४.४५

## ४.४६ शक्तिमलमाहात्म्यवर्णनं नाम षट्चत्वारिंशोऽध्यायः

श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
विचार्य देवपैः सर्वैः प्रेषयामास शङ्करः ।
ब्रह्माणं ब्राह्मणैः सार्धं स्नेहार्थं सोऽपि तं ययौ ॥ १॥

तं दृष्ट्वा गृह्य पुरुषो मुसलं सोऽपि दारुणम् ।
आययौ तं निरीक्ष्यैव पपाल स पितामहः ॥ २॥

वयं सर्वे द्विजाः पुत्र शस्त्रहीनाः समागताः ।
शृणु वाक्यं विचारज्ञ पलन्तस्ते तमब्रुवन् ॥ ३॥

तथापि न बुबोधैव पुरुषस्तं विलोक्य सः ।
ब्रह्मा जगाम शम्भुं तं वृत्तान्तमवदत्ततः ॥ ४॥

ततो विष्णुयुतः शम्भुः क्रोधानलविलोचनः ।
सङ्ग्रामाय ययौ तत्र मुसलं सोऽपि चाददे ॥ ५॥

(Page खं. ४ अ. ४६ पान ११६)
आगत्यैव न्यहञ्छम्भुं हृदये यमसन्निभः ।
शूलं पपात तद्धस्ताच्छिवश्च व्याकुलोऽभवत् ॥ ६॥

ततस्तं गदया विष्णुर्योधयामास दारुणम् ।
ततस्त्रिशूलघातेन शिरश्चिच्छेद शङ्करः ॥ ७॥

ममार पुरुषस्तत्र श्रुत्वा सा पार्वती पुनः ।
कोपयुक्ता च कोटीः सा शक्तीस्ता नव निर्ममे ॥ ८॥

तयाऽऽज्ञप्ता महादेव्यः संहर्तुं सकलं जगत् ।
प्राप्ता आलोक्य देवास्ते भयभीता बभूविरे ॥ ९॥

शङ्करेण द्विजास्तत्र प्रेषिता नारदादयः ।
अन्तरिक्षचराः सर्वे प्रणेमुः पार्वतीं ततः ॥ १०॥

रक्ष रक्ष जगत्सर्वं जगदम्ब त्वदुद्भवम् ।
तुष्टुवुस्तामथोवाच मुनीन् क्रोधयुता सती ॥ ११॥

पार्वत्युवाच ।
मम पुत्रः किमर्थं तैर्हतः सर्वैः सुरेश्वरैः ।
सजीवं संहरिष्यामि कुरुध्वं चेन्न संशयः ॥ १२॥

तथेति प्रतिपाद्यैव गतास्ते शङ्करं पुनः ।
शक्तयस्तम्भिताः सर्वाः शिवः सर्वैः समाययौ ॥ १३॥

युद्धे मृतस्य बालस्य मस्तकं त्वप्सरोगणाः ।
जगृहुस्तत्र तं दृष्ट्वा शिरोहीनं सुदुःखितः ॥ १४॥

शिवस्ततो गणान् प्राह यः पूर्वं दृश्यते त्वया ।
तमानयत हत्वा वै तस्य मस्तकमत्र यत् ॥ १५॥

ततो गजासुरः प्राप्तः सहसा नारदेरितः ।
हन्तुं देवगणान् सर्वान् महाबलपराक्रमः ॥ १६॥

ततश्च क्षोभिताः सर्वे पलायन्त दिशो दश ।
शूलघातेन शम्भुस्तं मारयामास तत्क्षणात् ॥ १७॥

तस्य मस्तकयोगेन पुरुषं ते दिवौकसः ।
योजयित्वा प्रजानाथ सजीवं चक्रिरे नरम् ॥ १८॥

सर्वे हतोद्यमा जातास्ततो ब्रह्मा समागतः ।
जीवयामास तं तत्र सजीवो न बभूव ह ॥ १९॥

ततो विष्णुः स्वयं तत्र जीवयामास विद्यया ।
सजीवो न बभूवाऽपि दुःखितोऽतिततोऽभवत् ॥ २०॥

ततः शिवः स्वयं तत्र जीवयुक्तं चकार तम् ।
सजीवं न ददर्शैव दुःखितोऽतितरां तदा ॥ २१॥

ततो विघ्नेश्वरं सर्वे तुष्टुवुः कार्यसिद्धये ।
अथर्वशिरसा दक्ष शङ्कराद्याः सुरेश्वराः ॥ २२॥

प्रार्थयामासुरत्यन्तं निर्विघ्नं कुरु विघ्नप ।
अधुना विश्वमेवेदमकाले लयमेष्यति ॥ २३॥

गणेशस्मरणेन स्म बुद्धिःप्राप्ता दिवौकसाम् ।
वेदमन्त्रेण देवास्ते तारमावाहयन्ति च ॥ २४॥

ओङ्कारस्तत्र मन्त्रेणाऽऽकर्षितः सहसाऽऽगतः ।
शवं प्रविश्य सन्तस्थौ ततः सोऽभवदुत्थितः ॥ २५॥

ततो ज्ञानयुता देवा जाता विघ्नविहीनकाः ।
तं दृष्ट्वा गजवक्त्रं वै प्रणवं प्रणवाकृतिम् ॥ २६॥

तुष्टुवुर्देवदेवेशं नानास्तोत्रैः प्रजापते ।
पुपूजुस्तं च सार्वादौ पूज्यं चक्रुः स्वमूलकम् ॥ २७॥

दक्ष उवाच ।
साक्षादोङ्काररूपश्च गणेशोऽयं न संशयः ।
स कथं मलजः शक्तेर्दैत्यमस्तकधारकः ॥ २८॥

एनं मे संशयं ब्रह्मञ्छेत्तुमर्हसि साम्प्रतम् ।
श्रुत्वा कथां महारम्यां ज्ञानयुक्तो भवाम्यहम् ॥ २९॥

मुद्गल उवाच ।

सती दक्षगृहे तात दग्धा सा शैलजाऽभवत् ।
हिमाचले स्वयं शम्भुस्तताप तप उत्तमम् ॥ ३० ॥

तत्र सा पार्वती देवी शुश्रूषायां प्रजापते ।
(Page खं. ४ अ. ४७ पान ११७)
निरता तां निरीक्ष्यैव शम्भुः सस्मार पूर्वगाम् ॥ ३१ ॥

ममाज्ञावशगा देवी नेयं दक्षगृहे गता ।
अतोऽहं न वृणोम्येतां पुनः शैलसुतां कदा ॥ ३२ ॥

तारकासुरभीतैर्देवैः कामः प्रार्थितस्ततः ।
स ययौ शङ्करस्थानं मोहितुं मदसंयुतः ॥ ३३ ॥

तं प्रज्वाल्य महेशानस्त्यक्त्वा हिमगिरिं ययौ ।
अन्यत्र सा ततो देवी खेदयुक्ता बभूव ह ॥ ३४ ॥

मनसि ज्ञानमार्गेण ज्ञात्वा शम्भुविचेष्टितम् ।
तपसा संयुता भूत्वा वनगा शिवमार्चयत् ॥ ३५ ॥

गते वर्षशते शम्भुः प्रसन्नो न बभूव ह ।
ततः सा विघ्नराजं च सस्मार ध्यानसंयुता ॥ ३६ ॥

वर्षेणैकेन हेरम्बः प्रसन्नश्च बभूव ह ।
शिवबुद्धिप्रभेदं स चकार बुद्धिधारकः ॥ ३७ ॥

ततो दयायुतः शम्भुस्तां ययौ द्विजरूपधृक् ।
शङ्करं निन्दयामास नानावाक्यैः समीपगः ॥ ३८ ॥

तच्छ्रुत्वा कम्पिता देवी बोधयामास शाम्भवैः ।
चेष्टितैस्तं ततः सोऽपि पुनर्निन्दां चकार ह ॥ ३९ ॥

स्थानं त्यक्त्वा ततो देवी तं जगाम द्विजं पुनः ।
तिरस्कृत्य शिवस्तां स्वं दर्शयामास रूपकम् ॥ ४० ॥

ततः सा तं प्रणम्यैव तुष्टाव विविधैः स्तवैः ।
गणेशं मनसा ध्यात्वा प्रार्थ्य तं सिद्धिदो भव ॥ ४१ ॥

ततः प्रसन्नभावेन शङ्करः प्रददौ वरम् ।
विस्मितस्तां निरीक्ष्यैव तपसा कर्शितां प्रभुः ॥ ४२ ॥

शिव उवाच ।

वृणोमि त्वां महादेवि वश्योऽहं ते सदाऽनघे ।
तपसा भक्तिभावेन न वियोगो भविष्यति ॥ ४३॥

धूलिधूसरितं तेंऽगं शिरोभूच्च जटान्वितम् ।
अतो मलस्तवाङ्गस्य सर्वपूज्यो भविष्यति ॥ ४४॥

इत्युक्त्वा शङ्करस्तत्रान्तर्धानं प्रचकार सः ।
पार्वती प्रेमसंयुक्ता स्वगृहं वै जगाम ह ॥ ४५॥

स्वभक्तस्य शिवस्यैव रक्षणार्थं वचो महत् ।
गौरीमलाङ्गसम्भूतो बभूव ह गजाननः ॥ ४६॥

गणेशान्न परः कोऽपि सर्वपूज्यो महामते ।
गणेशवरदानेन सत्यवाक्याः शिवादयः ॥ ४७॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते शक्तिमलमाहात्म्यवर्णनं नाम षट्चत्वारिंशोऽध्यायः ॥ ४.४६

## ४.४७ गणेशभक्ताधीनत्ववर्णनं नाम सप्तचत्वारिंशोऽध्यायः

श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
अन्यच्छृणु चरित्रं तु गजमस्तकधारणे ।
महेश इति विख्यातो राजा धर्मयुतोऽभवत् ॥ १॥

तस्य गेहे गुरुः साक्षाज्जगाम कीर्तिमोहितः ।
राज्ञा सम्मानितः सोऽपि नृपाय च ददौ वरम् ॥ २॥

बृहस्पतिरुवाच ।
प्रणतस्ते महीपाल मूर्धा मे प्रभविष्यति ।
सर्वपूज्यो विशेषेण गतोऽभूत् स्वगृहे गुरुः ॥ ३॥

ततः कदाचिद्राजर्षिर्नारदं मार्गसंस्थितम् ।
अवमत्य ययौ सोऽपि तं शशाप नृपाधमम् ॥ ४॥

नारद उवाच ।
मदेन राजशार्दूल मामनादृत्य गच्छसि ।

(Page  खं. ४ अ. ४७ पान ११८)
अतोऽसुरस्य योनौ त्वं पतिष्यसि न संशयः ॥ ५॥

काले सोऽपि ममाराऽथ गजयोनौ बभूव ह ।
गजासुर इति ख्यातो नरकुञ्जरवेषभृत् ॥ ६॥

गजासुरेण शम्भोस्तपः कृतं च विशेषतः ।
मन्त्रं जजाप शैवेनातोषयन्नियमे रतः ॥ ७॥

सहस्रेषु गतेष्वेव वर्षेषु वरदः शिवः ।
जगाद वृणु दैत्येश यत्ते मनसि वर्तते ॥ ८॥

स वव्रे राज्यमुग्रं मे देहि लोकत्रयस्य च ।
बलं सर्वातिगं शम्भो आरोग्यं सर्वपूज्यताम् ॥ ९॥

अन्ते मोक्षं च मे देहि तथेति शङ्करोऽब्रवीत् ।
मस्तकः सर्वपूज्यस्ते भविष्यति गजासुर ॥ १०॥

अतो गजासुरस्यैव मस्तकं गणपेन तत् ।
धृतं वचो रक्षणार्थं शङ्करस्य बृहस्पतेः ॥ ११॥

अन्यच्छृणु प्रजानाथ इतिहासं पुरातनम् ।
कदाचिच्छङ्करेणैव पूजितो गणनायकः ॥ १२॥

ददौ शिवाय निर्माल्यं मूर्तिसंस्थश्च विघ्नपः ।
स्वप्ने तस्य स माहात्म्यं कथयामास विस्तरात् ॥ १३॥

श्रीगणेश उवाच ।
एकनिष्ठतया शम्भो भक्त्याऽहं पूजितस्त्वया ।
प्रसन्नोऽहं स्वमूर्तिस्थः शृणु मे वचनं हितम् ॥ १४॥

निर्माल्यं मे गृहाण त्वं सर्वसिद्धिप्रदं शिव ।
येनेदं मस्तके पुष्पं धृतं मान्येन भक्तितः ॥ १५॥

सर्वपूज्यः स वै भावी सर्वातिगयशोधरः ।
ततः सोंऽतर्दधे ढुण्ढिः शिवो जागरितोऽभवत् ॥ १६॥

हस्ते पुष्पं समालोक्य विस्मितः शङ्करोऽभवत् ।
विचारं स चकारैव किमिदं देवभाषितम् ॥ १७॥

सर्वपूज्यो गणाधीशो नान्यो ब्रह्माण्डमण्डले ।

अतो मे भक्तिमाहात्म्यं परीक्षार्थं ददौ प्रभुः ॥ १८॥

ततः शिवेन निर्माल्यं न धृतं मस्तके स्वके ।
पूजायां स्थापितं दक्ष महाभक्तेन सर्वदम् ॥ १९॥

ततोऽत्रिसम्भवस्तत्र दुर्वासाः सहसाऽऽययौ ।
दर्शनार्थं महेशस्य शिवेन भृशमानितः ॥ २०॥

शिवो विचारमकरोदयं योगी सयोगवित् ।
वर्णाश्रमविहीनश्च मतः साक्षाद्विनायकः ॥ २१॥

अतो निर्माल्ययोग्योयं ददौ तस्मै सदाशिवः ।
निर्माल्यं विघ्नराजस्य कथयित्वा यशो महत् ॥ २२॥

तं प्रणम्य महायोगी दुर्वासाः प्रययो प्रभुम् ।
यथेच्छं विचरन् मार्गे ददर्श देवनायकम् ॥ २३॥

विचारं मनसा योगी चकार स्वहितावहम् ।
सर्वपूज्यो गणेशाद्वै नान्यो भवति निश्चितम् ॥ २४॥

वयं भक्ता गणेशस्य भजामोऽनन्यचेतसः ।
अतो निर्माल्ययोग्योऽहं नैव शङ्करवत् कदा ॥ २५॥

अयं देवपतिः साक्षादिन्द्रः सत्त्वगुणान्वितः ।
योग्योऽयं नैव सन्देहस्तं ययौ मुनिसत्तमः ॥ २६॥

तं दृष्ट्वा मघवा नत्वा स्थित ऐरावते प्रभुः ।
आज्ञां कुरु महाभाग मुने दासोऽस्मि ते जगौ ॥ २७॥

ततः सोऽपि प्रसन्नात्मा ददौ तस्मै महामुनिः ।
निर्माल्यं गणनाथस्य माहात्म्यं प्रोच्य सादरः ॥ २८॥

इन्द्रो राज्यश्रिया युक्तो गृहीत्वा गजमस्तके ।
निर्माल्यमिन्द्रः संस्थाप्य ययौ मार्गमवस्थितः ॥ २९॥

निर्माल्यस्यापमानेन भ्रष्टोऽभूद्देवनायकः ।
गता सत्त्वमयी लक्ष्मीर्गजस्तेजोयुतोऽभवत् ॥ ३०॥

(Page खं. ४ अ. ४७ पान ११९)
तिरस्कृत्य महेन्द्रं तं गजो हत्वा सुरान् परान् ।
ययौ वने प्रजानाथ स्वच्छन्दश्च बभूव सः ॥ ३१॥

ततोऽतितापसंयुक्त इन्द्रो हीनः श्रियाऽभवत् ।
दैत्यराजा बुभुजिरे सङ्गृह्य स्वर्गमागताः ॥ ३२॥

ततो बहौ गते काले गुरुणा बोधितः सुरः ।
देवैः सह गणेशानं तोषयामास नित्यदा ॥ ३३॥

गते वर्षसहस्रे तु गणेशस्तं ययौ तदा ।
पूजितः संस्तुतस्तेन प्रसन्नो वरदोऽभवत् ॥ ३४॥

श्रीगणेश उवाच ।
मा कुरुष्व महेन्द्र त्वं मम निर्माल्यदूषणम् ।
भक्त्यधीनः स्वभावेन प्रसन्नोऽहं कृतस्त्वया ॥ ३५॥

समुद्रतनया लक्ष्मीर्भविष्यति सुसिद्धिदा ।
तां प्राप्य पूर्ववद्देवाः श्रिया युक्ता भविष्यथ ॥ ३६॥

पूजाकृतफलं यच्च निर्माल्ये संस्थितं भवेत् ।
तस्य वन्दनमात्रेण सफलो जायते नरः ॥ ३७॥

भावेनाऽऽगृह्य निर्माल्यं मस्तके धारितं यदि ।
पुनस्तच्छुद्धभूमौ वै स्थापयेद्वा जले सुर ॥ ३८॥

गर्ते यत्र मनुष्यस्य पादस्पर्शो न वै भवेत् ।
तदा फलयुतः सोऽपि मद्रूपो जायते नरः ॥ ३९॥

सदा दुःखयुतं त्वाऽहं पुरा कर्तुं समुद्यतः ।
गुरुणा बोधितं मत्वाऽपराधं ते सहाम्यहम् ॥ ४०॥

मामेव शरणं देवमागतं संविचिन्त्य वै ।
बहुकालेन देवेश क्रोधहीनोऽहमागतः ॥ ४१॥

एवमुक्त्वा गणाधीशो गतः स्वानन्दके पुरे ।
इन्द्रो राज्यश्रिया युक्तो बभूवे स प्रजापते ॥ ४२॥

सदा निर्माल्यभावज्ञो गणेशभजने रतः ।
निर्विघ्नेन महेन्द्रश्चाऽऽमरणं राज्यमाकरोत् ॥ ४३॥

अधुना शृणु वृत्तान्तमैरावतगजस्य च ।
इन्द्रं त्यक्त्वा वने गत्वा चचार स्वेच्छयेरितः ॥ ४४॥

हस्तिनीभिः सदा मोहयुक्तः परमदुर्जयः ।
बुभुजे विविधान् भोगान् मदेनैव समन्वितः ॥ ४५॥

ततः स्वल्पेन कालेन गणेशो जठरे गतः ।
पार्वत्या वरदानेन तस्य दैत्यः शिरोऽहरत् ॥ ४६॥

मस्तकेन विहीनश्च बभूव गणनायकः ।
तादृशोऽवातरत्तत्र विष्णुः शोकपरोऽभवत् ॥ ४७॥

जनार्दनश्चेष्टितं ज्ञात्वा ध्यानेन ययौ वने ।
ऐरावतशिरश्छित्वा योजयामास तत्क्षणात् ॥ ४८॥

तत्रोङ्कारं समावाह्य मन्त्रेण जीवसंयुतम् ।
चकार विघ्नराजं स देवास्ते हर्षिता बभुः ॥ ४९॥

दैत्येन तच्छिरस्त्यक्तं नर्मदायां प्रजापते ।
तत्र कुण्डं समुत्पन्नं गणेशमहिमान्वितम् ॥ ५०॥

तत्र या दृषदो रक्ता नर्मदायां समास्थिताः ।
यत्र तत्र गणेशास्ते बभूवुः सर्वसिद्धिदाः ॥ ५१॥

दक्ष उवाच ।
कथं रेवाजले संस्था दृषदो मुनिसत्तम ।
गणेशास्तन्ममाऽऽचक्ष्व धन्या सा सरितां वरा ॥ ५२॥

मुद्गल उवाच ।
ब्रह्मकमण्डलूत्पन्नाश्चतस्रो नद्य एव च ।
गङ्गा च यमुना दक्ष नर्मदा तु सरस्वती ॥ ५३॥

गङ्गाया महिमानं तं सर्वत्रातुलमुत्तमम् ।
ज्ञात्वा सा नर्मदा देवी सन्तप्ता चेतसाऽभवत् ॥ ५४॥

ततस्तया तपस्तप्तं शङ्करस्य महात्मनः ।
शतवर्षे गते शम्भुः प्रसन्नो वरदोऽभवत् ॥ ५५॥

तया सम्पूजितः शम्भुः स्तुतो ज्ञात्वा मनेप्सितम् ।
(Page खं. ४ अ. ४८ पान १२०)
तस्या जले शिवाः सर्वे दृषदश्च कृतास्तदा ॥ ५६॥

ततो गङ्गासमं तेजो बभूव सरितः प्रभोः ।

नर्मदायास्तथा सापि न सन्तोषयुताऽभवत् ॥ ५७॥

पुनस्तताप तीव्रं सा तपो विघ्नेश्वरे रता ।
गतेषु वै सहस्रेषु वर्षेषु वरदोऽभवत् ॥ ५८॥

स्तुतः सम्पूजितः सोऽपि हृदीप्सितवरं ददौ ।
रक्तवर्णा गणेशाना दृषदो जलगाः कृताः ॥ ५९॥

ततः साऽतीव माहात्म्ययुता जाता सरिद्वरा ।
दर्शनेन जनानां वै गङ्गास्नानफलप्रदा ॥ ६०॥

यस्यास्तीरे जले संस्था दृषदः शङ्करात्मिकाः ।
रक्ता गणेशरूपास्तत् साम्यगा का भवेन्नदी ॥ ६१॥

महिमानं वर्णयितुं रेवायाः कः क्षमो भवेत् ।
गणेशशिवसंयुक्ता यत्र तत्र महानदी ॥ ६२॥

एतत्ते कथितं सर्वं विस्तराद्गणपस्य वै ।
चेष्टितं सर्वपापघ्नं सर्वसंशयनाशनम् ॥ ६३॥

आदौ दक्ष गणेशस्य दैत्यमस्तकधारणम् ।
ऐरावतस्य तद्वद्वै भक्तमाहात्म्यरक्षणात् ॥ ६४॥

शिरश्छेदादिकं तस्य चरित्रं तद् बृहस्पतेः ।
निर्माल्यस्य च रक्षार्थं माहात्म्यं गणपाश्रितम् ॥ ६५॥

भक्तवचः समाबद्धो गणेशः किं प्रजापते ।
न करोति महाभाग भक्ताधीनस्ततः स्मृतः ॥ ६६॥

येन स्वशिरसश्छेदः कृतो भक्तस्य कारणात् ।
मलजो गजवक्त्रश्च बभूवे भक्तिमोहितः ॥ ६७॥

एतत्ते कथितं सर्वं चेष्टितं परमाद्भुतम् ।
प्रकृतं शृणु दक्ष त्वं गजाननचरित्रकम् ॥ ६८॥

पार्वती प्रेमसंयुक्ता पूजयामास तं सुतम् ।
देवा हर्षयुताः सर्वे जग्मुः स्वं स्वं निवेशनम् ॥ ६९॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
चतुर्थे खण्डे गजाननचरिते गणेशभक्ताधीनत्ववर्णनं नाम सप्तचत्वारिंशोऽध्यायः
॥ ४.४७

## ४.४८ सिन्दूरवधो नामाष्टचत्वारिंशोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
एकदा नारदो योगी सिन्दूरासुरमागमत् ।
पूजितस्तेन तं विप्रो हर्षयुक्तो जगाद ह ॥ १॥

नारद उवाच ।
कैलासे शङ्करस्यैव बभूवे पुत्र उत्तमः ।
गणेशस्तपसा तुष्टः सिद्धिबुद्धिपतिः स्वयम् ॥ २॥

देवैः सम्प्रार्थितः सोऽपि त्वां हनिष्यति निश्चितम् ।
अतो यत्नपरो दैत्य भव गच्छामि मानद ॥ ३॥

एवमुक्त्वा महायोगी नारदः स्वेच्छया चरन् ।
गतः सोऽपि भयोद्विग्नो बभूवासुरनायकः ॥ ४॥

एतस्मिन्नन्तरे तत्र प्रधानं सहसाऽऽगतम् ।
विचार्य तेन दैत्येन्द्रो ययौ हन्तुं सुरान् पुरा ॥ ५॥

समागतं विलोक्यैव पलायन्तेन्द्रमुख्यकाः ।
ब्रह्माणं शरणं सर्वे भयभीता दिवौकसः ॥ ६॥

सिन्दूरः कोपसंयुक्त आययौ तत्र मानद ।
ब्रह्मा हंसं समारुह्य देवैः पपाल तत्क्षणात् ॥ ७॥

विकुण्ठे स गतो विष्णुं दैत्यस्तत्र समागतः ।
(Page खं. ४ अ. ४८ पान १२१)
ततो विष्णुः शिवं देवैर्ययौ सत्वर एव च ॥ ८॥

तत्राऽपि स ययौ दैत्यः शम्भुर्देवैर्गणेश्वरम् ।
तुष्टाव दैत्यनाशार्थं ततः स वरदोऽभवत् ॥ ९॥

सिन्दूरमाययौ तत्र प्रभुः परशुधारकः ।
गजाननो मूषकारूढको भूत्वा प्रतापवान् ॥ १०॥

तं दृष्ट्वा योद्धुमायान्तं सिन्दूरः क्रोधसंयुतः ।
जगाद स्वमदेनैव युक्तः परमदुर्जयः ॥ ११॥

सिन्दूर उवाच ।
किमर्थं रणभूमौ त्वमागतोऽसि गजानन ।
बालभावेन मां मूर्ख न जानासि सुरेरितः ॥ १२॥

मच्छ्वासेन चलन्ति स्म मेरुमन्दरकादयः ।
तलप्रहारवेगेन ब्रह्माण्डं शतधा भवेत् ॥ १३॥

शिवादयः सुरेशाश्च भयभीताः समागताः ।
तान् दृष्ट्वाऽपि गणाधीश योद्धुं कथमुपागतः ॥ १४॥

बालभावेन संयातं न त्वां हन्मि गजानन ।
त्वत्प्रेरकान् सुरांश्चाहं हनिष्यामि न संशयः ॥ १५॥

क्रोधेनाहं च यं कञ्चिदालिङ्गामि गजानन ।
स भस्मसाद्भवेन्नूनं किं करिष्यसि मां वद ॥ १६॥

एवं श्रुत्वा गणाधीशो दैत्येशस्य वचो महत् ।
स उवाच प्रहस्याऽथ सिन्दूरं लोकपीडकम् ॥ १७॥

श्रीगजानन उवाच ।
दैत्याधम महाबाहो मां न वेत्सि प्रभाविणम् ।
स्वानन्दवासिनं पूर्णं ब्रह्मभूतं विशेषतः ॥ १८॥

एवमुक्त्वा विराड्रूपं दधार स गजाननः ।
हस्ताभ्यां मर्दयित्वा तं मस्तके विभुरालिपत् ॥ १९॥

ब्रह्मणो रक्षणार्थं स वचः सिन्दूरधारकः ।
गजाननो बभूवापि भक्तेशो भक्तिभावितः ॥ २०॥

सिन्दूरं मर्दितं दृष्ट्वा देवा हर्षसमन्विताः ।
तुष्टुवुस्तं प्रपूज्यैव भक्तिनम्रात्मकन्धराः ॥ २१॥

देवा ऊचुः ।
गजाननाय पूर्णाय साङ्ख्यरूपमयाय ते ।
विदेहेन च सर्वत्र संस्थिताय नमो नमः ॥ २२॥

अमेयाय च हेरम्बाय ते परशुधारक ।
मूषकवाहनायैव विघ्नेशाय नमो नमः ॥ २३॥

अनन्तविभवायैव परेषां पररूपिणे ।

गुहाग्रजाय देवाय शिवपुत्राय ते नमः ॥ २४॥

पार्वतीनन्दनायैव देवानां पालकाय ते ।
सर्वेषां पूज्यदेहाय गणेशाय नमो नमः ॥ २५॥

स्वानन्दवासिने तुभ्यं शिवस्य कुलदैवत ।
विष्ण्वादीनां विशेषेण कुलदेवाय ते नमः ॥ २६॥

योगाकाराय सर्वेषां योगशान्तिप्रदाय च ।
ब्रह्मेशाय नमस्तुभ्यं ब्रह्मभूयप्रदाय ते ॥ २७॥

सिद्धिबुद्धिपते नाथ सिद्धिबुद्धिप्रदायिने ।
मायिने मायिकेभ्यश्च मोहदाय नमो नमः ॥ २८॥

लम्बोदराय वै तुभ्यं सर्वोदरगताय च ।
अमायिने च मायाया आधाराय नमो नमः ॥ २९॥

गजः सर्वस्य बीजं यत्तेन चिह्नेन विघ्नप ।
योगिनस्त्वां प्रजानन्ति तदाकारा भवन्ति ते ॥ ३०॥

तेन त्वं गजवक्त्रश्च किं स्तुमस्त्वां गजानन ।
वेदादयो विकुण्ठाश्च शङ्कराद्याश्च देवपाः ॥ ३१॥

शुकादयश्च शेषाद्याः स्तोतुं शक्ता भवन्ति न ।
तथापि संस्तुतोऽसि त्वं स्फूर्त्या त्वद्दर्शनात्मना ॥ ३२॥

गजाननं प्रणेमुस्तमेवमुक्त्वा शिवादयः ।
स तानुवाच प्रीतात्मा भक्तिभावेन तोषितः ॥ ३३॥

(Page खं. ४ अ. ४९ पान १२२)
श्रीगजानन उवाच ।
भवत्कृतमिदं स्तोत्रं मदीयं सर्वदं भवेत् ।
पठते शृण्वते देवा ब्रह्मभूयप्रदायकम् ॥ ३४॥

वरं वृणुत देवेशास्तुष्टिं स्तोत्रेण चागतः ।
दास्यामि सकलाभीष्टं भवतां यच्चिकीर्षितम् ॥ ३५॥

शिवादय ऊचुः ।
यदि प्रसन्नभावेन वरदोऽसि गजानन ।
तदा तिष्ठ गृहे शम्भोः सर्वदा विघ्ननाशनः ॥ ३६॥

त्वां दृष्ट्वा विघ्नहीनाश्च भविष्यामो निरन्तरम् ।
प्रत्यक्षं योगरूपं च पश्यामस्तेन सार्थकाः ॥ ३७॥

मुद्गल उवाच ।
गजाननस्तानुवाचाऽथ तथेति सुरेश्वरान् ।
स्वलोकं कल्पयामास तत्रैव शिवपार्श्वगम् ॥ ३८॥

दशयोजनसाहस्रविस्तारस्तस्य मानद ।
गणाः कुमुदमुख्याश्च कल्पिता मोदकादयः ॥ ३९॥

तिष्ठति स्वर्गलोकेषु तदादि गणनायकः ।
गणेशलोक एवाऽसौ बभूवे भुक्तिमुक्तिदः ॥ ४०॥

सकामास्तं समागम्य पतन्ति पृथिवीतले ।
निष्कामास्तस्य देहे ते अन्ते लीना भवन्ति हि ॥ ४१॥

एतत्ते कथितं सारं गजाननचरित्रकम् ।
शिवपुत्रत्वभावेन ब्रह्मेशोऽयं बभूव ह ॥ ४२॥

यः शृणोति नरो भक्त्या पठेद्वा तस्य सिद्धिदम् ।
भविष्यति प्रजानाथ तथा नानासुखप्रदम् ॥ ४३॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
चतुर्थे खण्डे गजाननचरिते सिन्दूरवधो नामाष्टचत्वारिंशोऽध्यायः ॥ ४.४८

## ४.४९ गणेशनिर्माल्यमाहात्म्यवर्णनं नामैकोनपञ्चाशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
निर्माल्यस्य च माहात्म्यं श्रुतं यत् परमाद्भुतम् ।
विस्तरेण पुनः स्वामिन् वद तस्य चरित्रकम् ॥ १॥

मुद्गल उवाच ।
पराशरगृहे देवो बभूव ह गजाननः ।
पुत्रभावेन तस्यापि चरितं कथितं पुरा ॥ २॥

पराशरेणैव तत्र स्थापिता मूर्तिरादरात् ।
गजाननस्य भो दक्ष सर्वदाऽभूत् सुसेविता ॥ ३॥

नित्यं तत्रैव देवेशा ब्रह्मविष्णुशिवादयः ।
रात्रौ गजाननं ते सम्पूजयन्ति सुसिद्धिदम् ॥ ४॥

गजासुरवधाद्दक्ष प्रारभ्य भक्तिसंयुताः ।
स्वर्गपुष्पोपहाराद्यैः सुप्रसन्नाननाम्बुजाः ॥ ५॥

कदाचित् तत्र राजर्षिर्मृगयासक्त आययो ।
सैन्येन स्वप्रधानैश्च संवृतो वीरभद्रकः ॥ ६॥

स आगत्य गणेशानं पूजयन् भक्तिसंयुतः ।
तत्रैव निशि संस्थोऽभूद्गाणपत्यो महायशाः ॥ ७॥

उषःकाले समागत्य स पुपूज गजाननम् ।
पुष्पाणि दृष्टवान् सोऽभूत् तत्र स्वर्गोद्भवानि च ॥ ८॥

सुवासबहुलान्येव मन्दाराद्यानि भूमिपः ।
विस्मितो मानसे भूत्वाऽभवत्तत्रैव संस्थितः ॥ ९॥

देवालयं पिधायाऽसौ भूपःसंस्थाप्य रक्षकान् ।
सैन्ययुक्तो जजागार देवदर्शनलालसः ॥ १०॥

(Page खं. ४ अ. ४९ पान १२३)
ततो देवेन्द्रमुख्याश्च रात्रौ देवाः समाययुः ।
तद् दृष्ट्वा गुप्तरूपेण पुपूजुस्तं गजाननम् ॥ ११॥

पूजयित्वा गताः सर्वे राजा तत्र समागतः ।
पूजां दृष्ट्वा महाभागो विस्मितोऽभूत् पुनः पुनः ॥ १२॥

ततः स्वगुरवे गत्वा पप्रच्छ विनयान्वितः ।
देवदर्शनकाङ्क्षी कृताञ्जलिः स विशेषतः ॥ १३॥

वीरभद्र उवाच ।
स्वामिन् देवगणाः पूजयितुं चात्र गजाननम् ।
नित्यमायान्ति तान् द्रष्टुमिच्छामि वद कारणम् ॥ १४॥

शिवशर्मोवाच ।
निर्माल्यसम्भवानि त्वं पुष्पाणि यत्र तत्र च ।
आच्छादय महीपाल तेषां ते दर्शनं भवेत् ॥ १५॥

तथेति वीरभद्रेण कृतं देवालये पुनः ।

देवाः समागता रात्रावज्ञानेनाचरंस्ततः ॥ १६॥

निर्माल्यस्पर्शमात्रेण पुण्यहीना बभूविरे ।
पूजां कृत्वा पुनर्गन्तुमिच्छां चक्रुः सुरेश्वराः ॥ १७॥

ततोऽतिवेगहीनैश्च देवैर्देवेन्द्रसत्तमैः ।
विचारेण समाज्ञातं कारणं गतिखण्डने ॥ १८॥

पादस्पर्शः कृतोऽस्माभिर्निर्माल्ये गणपस्य च ।
अतो गतिविहीनैश्च किं कर्तव्यं विशेषतः ॥ १९॥

ततो राजा समायातः पूजार्थं देवसन्निधौ ।
निर्माल्यमार्जनं कृत्वा ददर्श देवमुख्यकान् ॥ २०॥

तान् प्रणम्य महाभक्त्या तुष्टाव विविधैः स्तवैः ।
प्रसन्नास्ते च राजानमूचुः शम्भ्वादयः सुराः ॥ २१॥

शिवादय ऊचुः ।
राजंस्त्वया कृतं कर्म स्वार्थभावेन दुःखदम् ।
देवानां तत्र चोपायं कुरु गतिप्रदायकम् ॥ २२॥

ततो राजा भयोद्विग्नः स्वगुरुं प्रणिपत्य तम् ।
पप्रच्छ चलने तेषामुपायं पुण्यदं परम् ॥ २३॥

गुरुणा बोधितो राजा हृदि ध्यात्वा गजाननम् ।
गणेशपूजया जातं पुण्यपुष्पं ददौ तदा ॥ २४॥

अगाधपुण्ययोगेन देवा गतियुताः कृताः ।
विष्ण्वादयो जगुस्तं ते वरं वृणु महीपते ॥ २५॥

अमोघं दर्शनं प्रोक्तमस्माकं शास्त्रसम्मतम् ।
अतो मनेप्सितं भूप दास्यामो नात्र संशयः ॥ २६॥

ततो राजा च ब्रह्माद्यानुवाच स कृताञ्जलिः ।
गणेशे दृढभक्तिर्मेऽस्तु भवत्कृपया परा ॥ २७॥

ततस्ते विस्मिताः सर्वे प्रार्थयित्वा गजाननम् ।
ददुर्भक्तिं गणेशाने ब्रह्मभूतपदप्रदाम् ॥ २८॥

गताः स्वर्गेषु देवास्ते राजा तत्र समास्थितः ।
राज्यं पुत्रे विनिक्षिप्य बाले प्रधानसंयुते ॥ २९॥

नित्यं गजाननं भक्त्याऽभजदनन्यचेतसा ।
अन्ते स्वानन्दगो भूत्वा भजते गणनायकम् ॥ ३०॥

एवं निर्माल्यमाहात्म्यं सङ्क्षेपेण निरूपितम् ।
पठनाच्छ्रवणान्नृभ्यो भुक्तिमुक्तिफलप्रदम् ॥ ३१॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते गणेशनिर्माल्यमाहात्म्यवर्णनं नामैकोनपञ्चाशत्तमोऽध्यायः ॥ ४.४९

(Page खं. ४ अ. ५० पान १२४)

## ४.५० विघ्नासुराश्रमगमनं नाम पञ्चाशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
पार्श्वेण मुनिना पूर्वं दीपवत्सलया सह ।
पत्न्या परमसत्या वै तपसाऽऽराधितो विभुः ॥ १॥

दशवर्षसहस्रेषु गणेशो वरदोऽभवत् ।
स्तुतः सम्पूजितस्तेन नानास्तोत्रैः प्रजापते ॥ २॥

ताभ्यां पुत्रो भव स्वामिन् वृतस्त्वन्नौ वरो महान् ।
तथेति गणराजस्तौ कथयित्वा ययौ पुरम् ॥ ३॥

ततः कदाचिद्देवर्षिर्नारदस्त्विन्द्रमाययो ।
पूजितः सुरनाथेन जगाद वचनं हितम् ॥ ४॥

नारद उवाच ।
हिमवत्यां हिमप्रान्ते राजा मदसमन्वितः ।
अभिनन्दन एवाऽसौ यज्ञं करोति दुर्मतिः ॥ ५॥

ब्राह्मणान् स समानीय प्रोवाच बलगर्वितः ।
यज्ञमिन्द्रेण हीनं मे कुरुध्वं यत्नसंयुताः ॥ ६॥

नो चेत् सर्वान् हनिष्यामि क्रोधयुक्तो महर्षयः ।
तस्य तद्वचनं श्रुत्वा तथेति ब्राह्मणा जगुः ॥ ७॥

अद्य श्वो वा करिष्यन्ति यज्ञं भयसमन्विताः ।
ब्राह्मणा नात्र सन्देहो यथेच्छसि तथा कुरु ॥ ८॥

एवमुक्त्वा महायोगी नारदः प्रययौ ततः ।
विकुण्ठे स महाविष्णुं ततः स्वच्छन्दगोऽभवत् ॥ ९॥

इन्द्रः क्रोधसमाविष्टः सस्मार कालरूपिणम् ।
भगवन्तं महाकायमिन्द्रं स प्रययौ प्रभुः ॥ १०॥

तं प्रणम्य प्रतुष्टाव कथयामास दुःखदम् ।
वृत्तान्तं प्रार्थयामास यज्ञविध्वंसनाय तम् ॥ ११॥

कालस्तथेति तं तुष्टः कथयित्वा ययौ धराम् ।
धारयामास मनसि कालः कलयतां प्रभुः ॥ १२॥

कालाधीनं जगत् सर्वं सदा कालेन भुज्यते ।
कालं योगबलेनैव जयन्त्यत्र हि योगिनः ॥ १३॥

तत्रादौ कर्मसंशुद्धा योगनिष्ठा भवन्ति च ।
अतः कर्मविनाशार्थं यतिष्येऽहं विशेषतः ॥ १४॥

कर्महीना नराः सर्वे मलिनाः सम्भवन्ति च ।
नेच्छन्ति योगमाद्यं ते भविष्यन्ति मदात्मकाः ॥ १५॥

जन्ममृत्युयुताः सर्वे मदधीना न संशयः ।
इन्द्रेण प्रेरितस्तत्र च्छद्म नैव करोम्यहम् ॥ १६॥

विचार्य काल इति स आसुरं रूपमादधे ।
विघ्नरूपेण तं भूपं ययौ क्रोधसमन्वितः ॥ १७॥

यज्ञं बभञ्ज वेगेन ब्राह्मणांस्ताडयन् पुरा ।
ततो नानास्थले दुष्टो ह्यगमद्विघ्नरूपधृक् ॥ १८॥

कर्मखण्डनभावेन चचार बलमोहितः ।
सर्वत्र कर्मलोपाय विघ्नेनापीड्य मानवान् ॥ १९॥

ततः सोऽपि महावेगो जनान् कालेन मोहयन् ।
भ्रामयामास विप्रान् योगिनो नानास्वरूपधृक् ॥ २०॥

प्रातःकालं चकाराऽसौ निशीथं सायमादरात् ।
मध्याह्नं कारयामास नानाभ्रमकरः सदा ॥ २१॥

चकार रात्रिरूपं स दिवसं कर्मखण्डकः ।
रात्रिं दिवसरूपां तां वक्तुं नैव प्रशक्यते ॥ २२॥

लोकान् भ्रमयुतान् सर्वान् कर्महीनांश्चकार सः ।
चन्द्रमाच्छाद्य कालस्तु सूर्यं नक्षत्रकादिकान् ॥ २३॥

ततोऽतिभयसंयुक्ता देवा भ्रान्ता बभूविरे ।
कर्महीनप्रभावेण चोपोषणपरायणाः ॥ २४॥

न समर्था बभूवुस्ते कालं चलयितुं प्रभुम् ।
कालाधीनाः सुराः सर्वे सृष्टिस्थितिलयात्मकाः ॥ २५॥

ततो वसिष्ठमुख्याश्च ब्रह्माणं शरणं ययुः ।
(Page खं. ४ अ. ५० पान १२५)
तेन सार्धं च वैकुण्ठं जग्मुः कालभयान्विताः ॥ २६॥

विष्णुना शङ्करं जग्मुर्ब्राह्मणा भयसङ्कुलाः ।
स्तुत्वा नानाविधैः स्तोत्रैः शशंसुः कालचेष्टितम् ॥ २७॥

शिवेन संयुताः सर्वे विघ्नेशं तुष्टुवुः प्रभुम् ।
तपसा ध्यानयुक्तेन तोषयामासुरादरात् ॥ २८॥

गते वर्षशते काले परमात्मा गजाननः ।
वरदस्तान् ययौ देवान् बोधयामास तापसान् ॥ २९॥

ततस्तैः संस्तुतो देवः प्रार्थितो विघ्ननाशने ।
तथेति प्रतिपाद्यैव पार्श्वपुत्रो बभूव सः ॥ ३०॥

दीपवत्सलया युक्तः पार्श्वः परमयोगवित् ।
पुरा तताप घोरं स तपो विघ्नेश्वरं स्मरन् ॥ ३१॥

प्रगतेषु स वर्षेषु सहस्रे गणनायकः ।
प्रसन्नस्तं ययौ तेन पूजितः संस्तुतोऽभवत् ॥ ३२॥

स वव्रे मे भव स्वामिन् पुत्रः परमतारकः ।
संसारे पुत्रवात्सल्याद्भजिष्यामि सह स्त्रिया ॥ ३३॥

मूर्तौ देवस्वभावेन हृदये योगमार्गतः ।
भजिष्यामि त्रिधा ढुण्ढे त्वां सर्वत्र विशेषतः ॥ ३४॥

नानाकर्मपरोऽहं वै तव देव गजानन ।
पिता जातश्च तेन त्वं तारको मे भविष्यसि ॥ ३५॥

तथेति विघ्नराजस्तमुवाचांऽतर्दधे प्रभुः ।
विघ्नासुरविनाशाय बभूवे देहधारकः ॥ ३६॥

दीपवत्सलिकायाः स जठरे सङ्गतो विभुः ।
स्तनपानादिकं सर्वं स चकारातितोषितः ॥ ३७॥

पञ्चवर्षात्मको बालो बभूव मुनिवेश्मनि ।
तदा देवर्षयः सर्वे तं ययुर्भक्तिसंयुताः ॥ ३८॥

शम्भ्वाद्यान् स सुरान् वीक्ष्य वसिष्ठादिमुनीश्वरान् ।
पार्श्वः सम्भ्रमसंयुक्तस्तान् पुपूज यथाविधि ॥ ३९॥

उवाच प्रेमसंयुक्तो धन्यं मे जन्म कर्म च ।
येन देवगणाः सर्वे मुनयो गृहमागताः ॥ ४०॥

आज्ञां कुरुत देवेशा दासोऽहं भवतां द्विजाः ।
करिष्यामि न सन्देहो भवत्स्मृतिबलेन वै ॥ ४१॥

देवर्षय ऊचुः ।
तव भाग्यबलेनैव सुतः स्वानन्दगोऽभवत् ।
गजाननः स्वयं सर्वे प्रार्थयामो हिताय तम् ॥ ४२॥

विघ्नासुरेण दुष्टेन जगद्भ्रष्टं कृतं मुने ।
तस्य नाशार्थमेवं त्वं कुरु यत्नं महामते ॥ ४३॥

श्रुत्वा तेषां वचः क्रूरं मुनिः शोकयुतोऽभवत् ।
एतस्मिन्नन्तरे तत्र स गजानन आययौ ॥ ४४॥

तं दृष्ट्वा सहसोत्थाय नेमुः सर्वे सुरेश्वराः ।
मुनयस्तुष्टुवुर्देवं प्रार्थयामासुरादरात् ॥ ४५॥

तेषां हृदि स्थितं ज्ञात्वा शस्त्रहस्तश्चतुर्भुजः ।
मूषकोपरि संस्थो यो ययौ हन्तुं महासुरम् ॥ ४६॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे
चतुर्थे खण्डे गजाननचरिते विघ्नासुराश्रमगमनं नाम पञ्चाशत्तमोऽध्यायः ॥ ४.५०

(Page खं. ४ अ. ५१ पान १२६)

## ४.५१ विघ्नराजावतारवर्णनं नामैकपञ्चशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

मुद्गल उवाच ।
केनाऽपि विघ्नदैत्यस्य स्थानं न ज्ञायते सदा ।
कालस्य गणनाथस्तु ययौ तस्याऽश्रमं प्रभुः ॥ १॥

गुप्तरूपधरं विघ्नमङ्कुशेन समानयत् ।
तद् दृष्ट्वा परमाश्चर्यं देवाः सर्वे विसिस्मिरे ॥ २॥

ततस्तं स महाकालः प्रावमत्य गजाननम् ।
अन्तर्धाय स्वमात्मानमग्निरूपो बभूव ह ॥ ३॥

त्रैलोक्यसंस्थितं ज्ञात्वा तेजस्तत्त्वसमाश्रितम् ।
विघ्नं गजाननः क्रुद्धो वायुः संहारकोऽभवत् ॥ ४॥

ततः कालः स्वयं दक्षाऽभवदाकाशतत्त्वगः ।
वायुस्थं गणनाथं स कर्षयामास दारुणः ॥ ५॥

आकाशस्थं महाकालं ज्ञात्वाऽहङ्कारधारकः ।
गजाननश्च तं क्रुद्धोऽकर्षयत् प्रलयं प्रभुः ॥ ६॥

ततो विघ्नो महत्तत्त्वं समाश्रित्य गजाननम् ।
ताडयामास सङ्क्रुद्धः कालः कलयतां प्रभुः ॥ ७॥

ततो गजाननः क्रुद्धः प्रधानरूपधारकः ।
महत्तत्त्वस्थमेवं तं कर्षयामास दारुणम् ॥ ८॥

ततोऽभवत् सोऽपि महत्तत्त्वं त्यक्त्वा गुणेशगः ।
प्रधानं हन्तुमारेभे कालः परमदुर्जयः ॥ ९॥

ततो गजाननः साक्षाद्बिन्दुब्रह्मस्थितोऽभवत् ।
चतुष्पादमयीं शक्तिं हन्तुं चिक्षेप सोंऽतकम् ॥ १०॥

गुणेशान्न परः कालस्ततः खण्डितविक्रमः ।
कालो मायां चतुष्पादां निरीक्ष्य त्रासितोऽभवत् ॥ ११॥

शक्तिं दृष्ट्वा महाघोरां कालगर्वहरां पराम् ।
शरणं गणराजं स ययौ कालः प्रजापते ॥ १२॥

समागतं महाविघ्नं देवा मुनिगणास्ततः ।
विस्मिताश्चाऽभवन् सर्वे जयेति गणपं जगुः ॥ १३॥

विघ्नासुरः प्रणम्यादौ पुपूज ह गजाननम् ।
तद् दर्शनजबोधेन तुष्टाव स कृताञ्जलिः ॥ १४॥

विघ्नासुर उवाच ।
नमस्ते गणनाथाय गजाननस्वरूपिणे ।
योगाय योगनाथाय योगिभ्यो योगदायिने ॥ १५॥

अनाकाराय साकाररूपाय ते नमो नमः ।
नानाभेदविहीनाय भेदानां पतये नमः ॥ १६॥

विघ्नेशाय परेशाय कालभीतिहराय ते ।
हेरम्बाय परेषां वै परात्पर नमो नमः ॥ १७॥

अनादये ह्यनाथाय सर्वेषामादिमूर्तये ।
भक्तेशाय सदा भक्तवाञ्छितप्रद ते नमः ॥ १८॥

स्वानन्दवासिने तुभ्यं मूषकध्वजिने नमः ।
मूषकोपरिसंस्थाय ढुण्ढिराजाय ते नमः ॥ १९॥

आदिमध्यान्तहीनायादिमध्यान्तस्वरूपिणे ।
गजवक्राय वै तुभ्यं सर्वपूज्याय ते नमः ॥ २०॥

सिद्धिबुद्धिस्वरूपाय सिद्धिबुद्धिप्रदाय च ।
सिद्धिबुद्धिपते तुभ्यं महोदर नमो नमः ॥ २१॥

अमेयमायातिगमूर्तयेऽपि ते सदा सुशान्तिप्रदपूर्णमूर्तये ।
मनोवचोहीनमयाय तेजसे मनोवचोयुक्तकलाय ते नमः ॥ २२॥

अज्ञानदोषेण कृतोऽपराधो हेरम्ब तं क्षन्तुमिहार्हसि त्वम् ।
रक्षस्व मां भक्तियुतं दयाब्धे श्रेष्ठं वरं देहि परेशपाल ॥ २३॥

अधुना हि मया बुद्धं स्वरूपं ते गजानन ।
योगाकारमयोऽसि त्वं ततोऽहं निर्जितस्त्वया ॥ २४॥

त्वां विना का समर्थः स्यात् कालं कलयतां प्रभुम् ।
जेतुं धन्यः कृतो नाथ पादपद्मस्य दर्शनात् ॥ २५॥

(Page खं. ४ अ. ५१ पान १२७)
एवं स्तुत्वा महाविघ्नः प्रणनाम गजाननम् ।
तमुत्थाप्य जगादेदं वचनं सर्वदः परः ॥ २६॥

श्रीगजानन उवाच ।
त्वया कृतं मदीयं वै स्तोत्रं सर्वप्रदं भवेत् ।
कालस्य न भयं तेषां पठतां शृण्वतां सदा ॥ २७॥

यद्यदिच्छति तत्तद्वै दास्यामि स्तोत्रपाठतः ।
महायोगप्रदं चास्तु स्तोत्रं मत्प्रीतिवर्धनम् ॥ २८॥

हन्तुं त्वां क्रोधसंयुक्त आगतोऽहं न संशयः ।
वाञ्छितं वृणु नो हन्मि अधुना शरणार्थिनम् ॥ २९॥

महाकाल उवाच ।
भक्तिं देहि त्वदीयां मे सुदृढां तां गजानन ।
दासरूपेण मां नाथ रक्षस्व त्वत्समीपगम् ॥ ३०॥

ब्रह्मेश कार्यं कथय तत् करिष्यामि यन्त्रितः ।
स्थानं भक्ष्ययुतं देहि तत्र तिष्ठामि नित्यशः ॥ ३१॥

मन्नामपूर्वकं नाम कुरु त्वं ते गजानन ।
सर्वसिद्धिकरं नाथ पूर्णयोगप्रदं परम् ॥ ३२॥

जगाद गणराजस्तु ततस्तं भक्तमुत्तमम् ।
निर्विकल्पं मनस्तस्य ज्ञात्वा भक्तप्रपालकः ॥ ३३॥

श्रीगजानन उवाच ।
मदीया भक्तिरचला भविष्यति तवाऽनघ ।
यद्यदिच्छसि तत्तत्ते सफलं चास्तु सर्वदा ॥ ३४॥

मत् समीपे गणो भूत्वा तिष्ठ त्वं बलसंयुतः ।
महाविघ्नस्वरूपेण नानाविघ्नगणैर्वृतः ॥ ३५॥

विघ्नराजेति मन्नाम भविष्यति सुसिद्धिदम् ।
ब्रह्मभूयकरं पूर्णं वाञ्छितार्थप्रदायकम् ॥ ३६॥

यत्र मे स्मरणं नास्ति कर्मादौ पूजनं तथा ।
तत् सर्वं भुक्ष्व विघ्न त्वं भ्रंशयित्वा सुरेन्द्रकान् ॥ ३७॥

शिवविष्णुमुखा देवा अन्ये मुनिमुखा नराः ।
शेषाद्या नागराजास्ते नानाजन्तव एव च ॥ ३८॥

अहङ्कारेण संयुक्ता भवन्ति यदि तेऽसुर ।
तदा तान् भ्रंशयित्वा त्वं भुङ्क्ष्व भोगान् यथेप्सितान् ॥ ३९॥

मद्भक्तिकारिणः सर्वे त्वया पाल्या विशेषतः ।
तेषां निर्विघ्नभावेन पुरो भावपरो भव ॥ ४०॥

एवमुक्त्वान्तर्दधेऽसौ गजाननः प्रतापवान् ।
विघ्नो विघ्नैः समायुक्तः शान्तरूपो बभूव ह ॥ ४१॥

देवा मुनिमुखाः सर्वे स्वस्वस्थानं ययुस्ततः ।
सपत्नीकस्तत्र पार्श्वो मूर्च्छितोऽभूत् प्रजापते ॥ ४२॥

तयोर्हृदि गणाधीशः प्रकटोऽभूद्वचोऽब्रवीत् ।
मां चिन्तामणिरूपं ते पश्य तात हृदि स्थितम् ॥ ४३॥

मूर्तौ पूजनमात्रेण हृदि ध्यानेन मानदौ ।
सन्तुष्टौ जनकौ नित्यं संशयो न भविष्यथः ॥ ४४॥

यदा मे स्मरणं तातौ महाकार्ये करिष्यथः ।
द्रक्ष्यथो मां न सन्देहो योगशान्तौ भविष्यथः ॥ ४५॥

एवमुक्त्वांतर्दधे सोऽपि गणेशो हृदि रूपधृक् ।
तौ स्वस्थौ मूर्तिमास्थाप्य निरन्तरमपूजताम् ॥ ४६॥

इति ते गणराजस्य कथितं चरितं महत् ।
अंशा गजाननस्यैते अवतारा विधे स्मृताः ॥ ४७॥

वरेण्यपुत्रभावेन बभूव ह गजाननः ।
कस्मिन् काले वधार्थाय सिन्दूरस्य न संशयः ॥ ४८॥

कल्पभेदानुसारेण नानारूपधरः प्रभुः ।
गजाननो ह्यभूद्वर्णयितुं वापि न शक्यते ॥ ४९॥

(Page खं. ४ अ. ५२ पान १२८)

इत्याद्या बहवो भेदा गजाननस्य सिद्धिदाः ।
तांश्च ज्ञातुं कोर्हति वर्णयितुं वा प्रजापते ॥ ५०॥

सङ्क्षेपेण मया तुभ्यं कथितं पापनाशनम् ।

चरितं विघ्नराजस्य भुक्तिमुक्तिफलप्रदम् ॥ ५१॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते विघ्नराजावतारवर्णनं नामैकपञ्चशत्तमोऽध्यायः ॥ ४.५१

## ४.५२ चरित्रमाहात्म्यवर्णनं नाम द्विपञ्चाशत्तमोऽध्यायः

॥ श्रीगणेशाय नमः ॥

दक्ष उवाच ।
गजाननस्य क्षेत्रं मे वद कुत्र प्रतिष्ठितम् ।
माहात्म्यं तस्य विप्रेश सङ्क्षेपेण सुसिद्धिदम् ॥ १॥

मुद्गल उवाच ।
दिशान्ते नैरृते कोणे देवैर्मुनिभिरादरात् ।
स्थापितो गणनाथश्च गजवक्रावतारधृक् ॥ २॥

द्वीपेषु स्वस्वखण्डेषु विभुर्नैरृतकोणगः ।
पूज्यते मानवैः सर्वैर्देवैश्च मुनिभिस्तथा ॥ ३॥

भाद्रशुक्लचतुर्थ्यां तैः स्थापितो गणनायकः ।
मध्याह्नसमये दक्ष पुरा सोत्सववर्धिनी ॥ ४॥

तस्यां यात्रां प्रकुर्वन्ति जना भक्तिपरायणाः ।
त्रिलोकस्था विशेषेण नानासिद्धिप्रवृद्धये ॥ ५॥

दशयोजनविस्तारो विभुः क्षेत्रस्य मध्यगः ।
मूषकश्चतुरस्त्रस्य पुरतस्तिष्ठति प्रभोः ॥ ६॥

सिद्धिस्तस्याऽपि वामाङ्गे दक्षिणाङ्गे च बुद्धिका ॥

अष्टदिक्षु प्रजानाथ सिद्धयोऽष्टौ व्यवस्थिताः ॥ ७॥

अष्टमातृगणः पश्चात्ततोऽष्टौ भैरवा मताः ।
दशदिक्षु च दिक्पालाः सशस्त्राः संस्थिताः प्रभोः ॥ ८॥

शिवविष्णुमुखा देवा वामाङ्गे संस्थिता विभोः ।
काश्यादिमुख्यक्षेत्राणि गङ्गाद्याश्च तथोत्तरे ॥ ९॥

मुनयः शेषकाद्याश्च पृष्ठभागे व्यवस्थिताः ।

भक्ता मुद्गलमुख्याश्च पुरतः संस्तुवन्ति तम् ॥ १०॥

त्रिलोकेषु च ये मुख्यास्ते सर्वे तत्र संस्थिताः ।
अंशेन देवसेवार्थं स्वाधिकारेषु मानद ॥ ११॥

तीर्थेषु स्नानकर्तारः समुद्रे भक्तिसंयुताः ।
स्वस्वनाम्नाङ्कितेष्वेव स्वल्पदेहधरा अपि ॥ १२॥

परस्परं बोधयन्तो गजाननचरित्रकम् ।
नृत्यन्ति ते हसन्त्येव देवचेष्टापरायणाः ॥ १३॥

गणेशतीर्थं वै तत्र गजाननसुसिद्धिदम् ।
तत्र स्नानं प्रकुर्वन्ति ये नरास्ते प्रजापते ॥ १४॥

कृतकृत्या न सन्देहो मनेप्सितफलप्रदे ।
तत्र यात्रां प्रकुर्वन्ति चतुर्विधफलप्रदाम् ॥ १५॥

धन्यास्ते पुरुषा लोके कृतकृत्या भवन्ति वै ।
वसन्ति ये यत्र कुत्र गजाननपरायणाः ॥ १६॥

ब्रह्मभूताश्च ते प्रोक्ता दर्शनात् पापनाशनाः ।
अन्यदेवस्य ये भक्ता मृताः क्षेत्रे भवन्ति चेत् ॥ १७॥

ते तस्य लोकमासाद्य भोगान् भुञ्जन्ति शाश्वतान् ।
तदन्ते गणनाथं वै गच्छन्ति ब्रह्मसिद्धये ॥ १८॥

तत्र सिद्धिं गता नाना नरा नार्यश्च भो विधे ।
तेषां चरित्रकं पूर्णं मया वक्तुं न शक्यते ॥ १९॥

(Page खं. ४ अ. ५२ पान १२९)
यात्रामात्रेण तत्रैव चतुर्विधफलं लभेत् ।
मरणे ब्रह्मभूतश्च नरो भवति निश्चितम् ॥ २०॥

सङ्क्षेपेण मया तुभ्यं कथितं क्षेत्रगं महत् ।
माहात्म्यं विस्तरेणैव कोऽपि नार्हति निश्चितम् ॥ २१॥

इदं गजाननस्यापि चरितं सर्वसिद्धिदम् ।
भविष्यति महाभाग सर्वसौख्यकरं तथा ॥ २२॥

नानाख्यानसमायुक्तं कथितं ते प्रजापते ।
यः शृणोति नरो भक्त्या पठेद्वा तस्य सिद्धिदम् ।

भविष्यति महाभाग सर्वसौख्यकरं तथा ॥ २३॥

नानेन सदृशं किञ्चित् पावनं ब्रह्मदायकम् ।
विद्यते सर्वशास्त्रेषु भुक्तिमुक्तिप्रदायकम् ॥ २४॥

स्वर्णभारसहस्राणि नित्यं यो वै ददाति चेत् ।
तदस्य श्रवणान् मर्त्यो लभते नात्र संशयः ॥ २५॥

गोदानानि नरो यस्तु ददाति भक्तिसंयुतः ।
नित्यं सहस्रशो दक्ष फलं प्राप्नोति शाश्वतम् ॥ २६॥

नानादानानि यो दद्याद्ब्राह्मणेभ्यो यथाविधि ।
तेषां पुण्यफलं भुक्त्वा पतति मानवो भुवि ॥ २७॥

अस्य श्रवणमात्रेण भुक्त्वा भोगान् मनेप्सितान् ।
अन्ते स्वानन्दगो भूत्वा ब्रह्मभूतो भवेन्नरः ॥ २८॥

नानायज्ञादिकं कर्म कुरुते मानवः सदा ।
नास्य श्रवणमात्रेण कलांशमपि तत् फलम् ॥ २९॥

जन्ममृत्युप्रदान्येव कर्माणि सकलानि च ।
इदं सर्वप्रदं प्रोक्तमन्ते ब्रह्मप्रदायकम् ॥ ३०॥

सङ्क्षेपेण प्रजानाथ कथितं सुखदं परम् ।
गजाननस्य माहात्म्यं किं भूयः श्रोतुमिच्छसि ॥ ३१॥

सूत उवाच ।
एवमुक्त्वा महायोगी मुद्गलो विरराम ह ।
श्रुत्वा दक्षोऽपि संहृष्टो बभूव मुनिसत्तम ॥ ३२॥

मयाऽपि कथितं सर्वं माहात्म्यं पूर्णसिद्धिदम् ।
तुभ्यं विप्रर्षियुक्ताय यथा मुद्गलभाषितम् ॥ ३३॥

धन्योऽहं कृतकृत्योऽहं भवतां सङ्गमेन वै ।
गणेशामृतधारायां प्रवृत्तः सर्वभावतः ॥ ३४॥

गणेशान्न परं किञ्चित् सर्वादौ तेन स स्मृतः ।
सर्वपूज्यश्च विप्रर्षे ब्रह्मेशो ब्रह्मदः परः ॥ ३५॥

श्रुतं त्वया महाभाग ब्राह्मणैः शास्त्रकोविदैः ।
अधुना किं च ते विप्र इच्छा श्रोतुं वदस्व ताम् ॥ ३६॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते चरित्रमाहात्म्यवर्णनं नाम द्विपञ्चाशत्तमोऽध्यायः ॥ ४.५२

॥ इति चतुर्थः खण्डः समाप्तः ॥

॥ इति श्रीमुद्गलपुराणे चतुर्थः खण्डः समाप्तः ॥

Proofread by Yash Khasbage

---

*MudgalapurAna Khanda 4 Gajananacharitam*

pdf was typeset on September 18, 2023

Please send corrections to *sanskrit@cheerful.com*